 

॥ श्री ॥

# हर्षचरितसार:

—:०:—

चैन्नपुरी पच्चयप्पकलाशाला-भूतपूर्व संस्कृताध्यापकेन
पण्डित वे० अनंताचार्येण
श्रीमद्भट्टबाणसूक्तिभिरेव संकलित:

—:०:—

प्रकाशक
रामनारायण लाल
प्रकाशक तथा पुस्तक-विक्रेता
इलाहाबाद

एकादशम संस्करण ] १९५४ [ मूल्य ॥=)

# भूमिका

यद्यपि भरतखंडेऽस्मिन् महामहिम्नाम् अस्मत्पूर्वपुरुषाणाम् अनुग्रहपरंपरापरीवाहभूतानि, अद्यत्वे पुरुषायुषशतेनापि अधिगन्तुम् अशक्यानि, रसभरभरितानि असंख्येयानि पद्यमयानि वाङ्मयानि, सकलैः सहृदयैः सशिरःकम्पं समास्वाद्यन्ते; तथापि भिन्नरुचीन् जनान् समाराधयितुम् उद्युञ्जानैः साहित्यरसास्वादरसिकैः अभिरूपैःगद्यरूपाणां प्रबन्धानां वैरल्यात् अत्यर्थं कृच्छ्रम् अनुभूयते इति महदिदं विषाद-स्थानम्। एवमस्मिन् दुर्जाते भट्टबाणप्रभृतयः कतिपये कवयः केवलं बहुमन्तव्याः यदेते कविताकौशलेन आत्मीयेन अस्मिन् साहित्यप्रपञ्चे सर्वथा गद्यग्रन्थदौर्लभ्यम् अपाचक्रिरे। तत्रापि महाकविः भट्टबाणोऽयं करतलामलकीकृतसारस्वतसर्वस्वः कादम्बरीहर्षचरिताख्यग्रंथद्वयनिर्माणेन बहु उपकृतवान् सहृदयगोष्ठ्याः बहवः खलु अध्येतारः निरतिशय-रसभरभरितासु सुधानिष्यन्दनिर्विशेषासु श्रीमतो भट्टबाणस्य सूक्तिषु दीर्घदीर्घसमासगर्भितानां नानाविधविभक्त्यन्तविशेषणसमुदायसंवलितानां सौदामिनीविलसितैरिव क्षणदृष्टनष्टैः क्रियापदैः समुद्वेल्लितानाम् वाक्यसमुदायानाम् अनुवाचनेन परिश्रान्ताः कथाभागम् आन्तम् अवगन्तुम् अपारयन्तः भृशं परिश्रान्ताः दरीदृश्यन्ते। यद्यप्येतादृशानाम् अध्येतॄणाम् उपकर्तुम् ईहमानाः बहवः पंडिताः कादम्बरीं हर्षचरितं च बहुधा संचिक्षिपुः तथापि लेशतोऽपि वर्णनाप्रपञ्चं दूरीकृत्य प्रवृत्तस्य कथामात्रसारस्य एतादृशस्य ग्रन्थस्य व्युत्पित्सूनाम् अत्यन्तोप-कारकत्वं मनसि निधाय अहम् इदं ग्रन्थग्रथने प्रावर्तिषि।

अस्य महाकवेः जीवितचरितं तावत् कविनैव वर्णितं ग्रन्था-रम्भे। अस्य जीवितकालोऽपि अस्मदीयचन्द्रापीडचरितस्य आङ्गल-

टिप्पणीभूमिकायां * निर्णीतोऽस्ति। शब्दार्थालंकारसौष्ठवादि-विचारस्तावत् कथाप्रधानेऽस्मिन् ग्रन्थे नात्यन्तम् औचित्यम् आधास्यतीति कृत्वा नात्र प्रयत्यते। 'संस्कृतभाषायां गद्यग्रन्थानां प्रणयने पदापेक्षया महान् प्रयासः, इति खलु कवीनाम् अनुभवसिद्धं तत्त्वम्। 'इदमेव गद्यग्रन्थवैरल्ये प्रधानं कारणं भवितुम् अर्हति' इति च सुदृढम् अभिप्रैमः। गद्यग्रन्थेषु अक्षरसंख्यानियमाभावेऽपि श्रवणकटुतराणि पदानि विहाय मधुरमधुराणि पदसंघटनानि संपादयितुं कियत् कौशलं प्रदर्शयितव्यम् इति सुस्पष्टं भविष्यति साक्षात् भट्टबाणकृतीः अनुवाचयतां विपश्चिताम्। श्रवणासेचनकैः पदसंघटनैः आयोजितानि अच्छोदसरोवर्णनानि इदानीमप्यस्माकं हृदयात् नापसर्पन्ति। मधुरमधुराणि जाबालिपर्णशालावर्णनानि नः स्वान्ते सततं नरीनृत्यन्ति। महाकवेः भट्टबाणस्य कृतीः संक्षेप्तुं व्यवस्यद्भिः अत्याश्चर्याणि अमृतप्रायाणि वर्णनानि विहातुं कीदृशं मनःकाठिन्यम् आविष्कृतम् इति सहृदया विदांकुर्वन्तु।

कविम् इमम् अधिकृत्य अयं कथाखंडः प्रस्तावेऽस्मिन् अनुगुणः इति कृत्वा चिन्त्यते—यदा हि भट्टबाणः कादम्बरीग्रन्थप्रणयनसमये नियतिवशात् अवशिष्टं ग्रन्थं प्रपूरयितुम् अनलंकर्मीणः अभवत्; तदा आत्मनः आत्मजयोः अन्यतरेण पूरयितुमिच्छन् तावाहूय पुरोवर्तिनं स्थाणुम् अधिकृत्य वाक्यम् एकं ब्रूतम्' इति आदिदेश। साङ्गेषु वेदेषु अधीती शब्दार्थसौष्ठवानभिज्ञः अस्य ज्येष्ठस्तनूजः वेदवाक्यवत् स्वरं कृत्वा "शुष्को वृक्षः तिष्ठति" इत्युवाच। अथ च काव्यालंकारनिपुणः रसरीतिभावादिषु कृतपरिश्रमः कनीयान् कुमारः "नीरसतरुरिह निवसति" इति निजगाद। दृश्यताम् उभयोः वाक्ययोः एकार्थम् अभिदधतोः महत्

*(Introduction and Notes to Chandrapida Charitam, published by Ram Narain Lal, Allahabad.)

उक्तिवैचित्र्यम् । अथ च भट्टबाणः कनीयांसम् एव ग्रन्थमिमं पूरयितुम् आदिदेश इति । एवञ्च गद्यग्रन्थप्रणयने केवलम् अनुभवम् एव प्रमाणीकृत्य पदसंघटनेषु माधुर्यं संपादयितव्यम् । तत्र महाकविः भट्टबाणः सार्वभौमः विजयते । सोऽयमधीतचतुर्दशविद्यास्थानः परिचितसकलकलामंडलः नानादेशसंचरणसमधिगतलोकतत्त्वः स्वस्थशैशवादारभ्य विनयाधानरक्षणभरणप्रभृतिभिः पितृतुल्यं हर्षदेवं प्रीणयितुम् तच्चरितम् उपवर्णयन् अनेन हर्षचरितग्रन्थप्रणयनेन गद्यकविप्रथाम् आवाप्य विजृम्भितोत्साहः निरवद्यगन्ध कादम्बरीग्रन्थं प्रणिनाय । अतः सर्वैरपि संस्कृतभाषाप्रणयिभिः भट्टबाणस्य आद्यः कवितविलासभूतोऽयं हर्षचरितग्रन्थः अवश्यम् अनुवाचयितव्यः । तदनुवाचने प्रवृत्तानां विदुषां प्रथमतः कथामात्रम् अवगमयितुम् अलंकर्मीणः मदीयोऽयं उद्योगः सर्वथा सफलः भविष्यति इति संभावयामि । ग्रन्थेऽस्मिन् वर्णनाप्रपञ्चान् दूरीकृत्य श्रीमद्भट्टबाणवाक्यैरेव कथाभागमात्रं संग्रथितम् । तमिमं स्निग्धया दृष्ट्या पश्यन्तु सुधियः ।

इति

KRISHNAPURAM
KODAMBAKAM POST
MADRAS
27th October 1931.

V. ANANTACHARYA.

ओम्

# हर्षचरितसारः

एवमनुश्रूयते—पुरा किल भगवान् परमेष्ठी सुनासीरप्रमुखैः गीर्वाणैः परिवृतः ब्रह्मोद्याः कथाः कुर्वन् कदाचिदासाञ्चक्रे। तथासीनं च तं मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सर्वे च सप्तर्षिपुरस्सराः महर्षयः सिषेविरे; केचित् ऋचः समुदचारयन्; केचित् यजूंषि अपठन्; केचित् सामानि जगुः; तत्र तेषाम् अन्योन्यस्य विद्याविवादाः प्रादुरभवन्। अथातिरोषणः प्रकृत्या महातपाः मुनिरत्रेस्तनयः नाम्ना दुर्वासाः द्वितीयेन मन्दपालनाम्ना मुनिना सह कलहायमानः साम गायन् क्रोधान्धो विस्वरमकरोत्। सर्वेषु च शापभयात् प्रतिपन्नमौनेषु मुनिषु, भगवती देवी सरस्वती श्रुत्वा जहास।

दृष्ट्वा च तां हसन्तीम् स मुनिः 'आः पापकारिणि! दुर्विदग्धे! मामुपहससि' इत्युक्त्वा कामण्डलवेन वारिणा समुपस्पृश्य शापजलं जग्राह। ततो 'मर्षय भगवन्' इत्यनुनाथ्यमानोपि विबुधैः, 'स्खलितमेकं क्षमस्व' इति प्रसाद्यमानोपि स्वशिष्यैः, 'पुत्र! मा कृथास्तपसः प्रत्यूहम्' इति निवार्यमाणोप्यत्रिणा, "दुर्विनीते! व्यपनयामि ते विद्या-

जनितामुन्नतिमिमाम्, अधस्तात् गच्छ मर्त्यलोकम्" इत्युक्त्वा तच्छापोदकं विससर्ज। प्रतिशापदानोद्यतां सावित्रीम्, 'सखि! संहर रोषम्' इत्यभिदधाना सरस्वत्येव न्यवारयत्।

अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहो भगवान् एवमुवाच—"ब्रह्मन्! न खलु साधुसेवितोऽयं पन्थाः; क्षमा हि मूलं सर्वतपसाम्; रोषदोषनिषद्ये स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम्" इत्युक्त्वा पुनराह—"वत्से सरस्वति! विषादं मा गाः, एषा त्वामनुयास्यति सावित्री। आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यति" इत्यभिधाय समुचिताह्निककरणायोदतिष्ठत्।

सरस्वत्यपि शप्ता किञ्चिदधोमुखी समं सावित्र्या गृहमगात्; क्रमेण च मन्दायमाने वासरे स्पष्टे च प्रदोषसमये सावित्री शून्यहृदयामिव किमपि ध्यायन्तीम् सास्रां सरस्वतीमवादीत् "सखि! त्रिभुवनोपदेशदानदक्षायाः तव पुरो जिह्वा जिह्रेति मे जल्पितुम्। जानास्येव दुरतिक्रमणीया दैववृत्तयः, दुस्त्यजाः जन्मभूमयः, दारयति हृदयं दारुणः संस्तुतजनविरहः; तथापि नार्हस्येवं भवितुम्; पुराकृते कर्मणि वलवति तिष्ठति कोवावसरः शोकस्य; तदलम्; कथय कतमं भुवो भागमलङ्कर्तुमिच्छसि" इति।

सरस्वती प्रत्यवादीत् "प्रियसखि! त्वया सह विचरन्त्याः

न मे काञ्चिदपि पीडाम् उत्पादयिष्यति ब्रह्मलोकविरहः। त्वमेव वेत्सि भुवि समाधियोग्यानि स्थानानि" इत्यभिधाय विरराम। अन्येद्युः उदिते भगवति विरोचने, सरस्वती परित्यज्य नियोगविक्लवं स्वपरिजनं, त्रिः प्रदक्षिणीकृत्य चतुर्मुखं, सावित्रीद्वितीया ब्रह्मलोकतः निर्जगाम। निर्गत्य च क्रमेण मन्दाकिनीमनुसरन्ती मर्त्यलोकमवततार। अपश्यच्च अम्बरतलस्थितैव हिरण्यवाहनामानं महानदम् यं जनाः 'शोण' इति कथयन्ति। दृष्ट्वा च तं रामणीयकहृतहृदया तस्यैव तीरे वासमरचयत्। उवाच च सावित्रीम्—"सखि! रमयन्ति मां महानदस्यास्य उपकण्ठभूमयः; पक्षपाति च हृदयम् अत्रैव स्थातुं मे" इति। तयापि तथेत्यभिनन्दितवचना तस्य पश्चिमे तीरे समवातरत्। एकस्मिंश्च शुचौ लतामण्डपे गृहबुद्धिम् बबन्ध। विश्रान्ता च नातिचिरात् सावित्र्या सार्द्धम् उत्थाय उच्चितार्चनकुसुमा सस्नौ। पुलिन-पृष्ठे प्रतिष्ठितं सैकतं शिवलिङ्गम् अभ्यर्च्य, अयत्नोपनतेन फलमूलेन शिशिरेण शोणवारिणा च शरीरस्थितिमकरोत्। अतिवाहितदिवसा च लतामण्डपशिलातले कल्पितपल्लव-शयना सुष्वाप। अन्येद्युरपि अनेनैव क्रमेण नक्तंदिनमत्यवाहयत्।

एवमतिक्रामत्सु दिवसेषु कदाचित् उत्तरस्यां दिशि तुरङ्गहेषितह्रादमशृणोत्। उपजातकुतूहला च निर्गत्य लतामण्डपात् विलोकयन्ती, कृपाणपाणिना युवप्रायेण पदाति-

बलेन सनाथम् अश्ववृन्दं ददर्श। मध्ये च तस्य पाण्डुरेणातपत्रेण कृतच्छायम् अष्टादशवर्षदेशीयं युवानमद्राक्षीत्। पार्श्वे च तस्य द्वितीयं परिणतवयसं पुरुषम्। अथ स युवा दिव्याकृति तत् कन्यायुगलं दूरादेव दृष्ट्वा तुरगादवततार। निवारितपरिजनश्च तेन द्वितीयेन साधुना सह चरणाभ्यामेव सविनयमुपससर्प। कृतोपसंग्रहणौ तौ सावित्री समं सरस्वत्या वनवासोचितेनातिथ्येन उपजग्राह।

आसीनयोश्च तयोरासीना तं द्वितीयं प्रवयसमवादीत् "आर्य! कथय महानुभावस्यास्य आगमनेन कतमो देशः शून्यतां नीतः? क्व वा गन्तव्यम्? कस्य वायं कुमारः? का चास्य जननी? कानि चास्य नामाक्षराणि?" इति स प्रतिव्याजहार—"आयुष्मति! श्रूयताम्! अयं खलु भूषणं भार्गववंशस्य भगवतः च्यवनस्य तनयः दधीचो नाम, जनन्यस्य शर्यातस्य सुता राजपुत्री सुकन्या नाम। तां खलु देवीमन्तर्वत्नीं विदित्वा वैजनने मासि प्रसवाय पिता पत्युः पार्श्वात् स्वगृहमानाययत, असूत च सा तत्र देवी दीर्घायुषमेनम्। तत्रैव राजगृहे राजीवलोचनोऽयमवर्धत। भर्तृगृहमागच्छन्त्यामपि दुहितरि मातामहो मनोविनोदनमासेचनकदर्शनमिमं नामुञ्चन्नसारम्। अशिक्षतायं तत्रैव सर्वा विद्याः सकलाश्च कलाः, कालेन चोपारूढयौवनमिममालोक्य मातामहः पितुरन्तिकमधुना व्यसर्जयत्। मामपि तस्य देवस्य

शर्यातस्य आज्ञाकारिणं विकुक्षिनामानं भृत्यमवधारयतु भवती। इतश्च गव्यूतिमात्रं पारेशोणं भगवतः च्यवनस्य आश्रमः। तदवधिश्चेयं नौ यात्रा। वयमपि शुश्रूषवो वृत्तान्तमायुष्मत्योः; नेयमाकृतिः दिव्यतां व्यभिचरति, गोत्रनामनी तु श्रोतुमभिलषति नौ हृदयम्" इति। सात्ववादीत्—आर्य! "श्रोष्यसि कालेन। भूयसो दिवसानत्र स्थातुमभिलषति नौ हृदयम्। अल्पीयांश्चाध्वा। परिचय एव प्रकटीकरिष्यति। आर्येण न विस्मरणीयोयमनुषङ्गदृष्टो जनः" इत्यभिधाय तूष्णीमभवत्। अथ दधीच एवमुवाच, "आर्य करिष्यति प्रसादमार्या आराध्यमाना; पश्यामस्तावत्तातम्! उत्तिष्ठ व्रजामः" इति। तथेति तेनाभ्यनुज्ञातः शनैरुत्थाय कृतनमस्कृतिरुच्चचाल। तुरगारूढं च तं प्रयान्तं सरस्वती निश्चलतारकेण चक्षुषा सुचिरं व्यलोकयत्। उत्तीर्य शोणमचिरेणैव कालेन दधीचः पितुराश्रमपदं जगाम।

गते च तस्मिन् सा तामेव दिशामालोकयन्ती सुचिरमतिष्ठत् अथ स्मृत्वा तां तस्य रूपसंपदं पुनः पुनः व्यस्मयतास्याः हृदयम्। भूयोपि चक्षुराचकांक्ष तद्दर्शनम् अथ गणरात्रापगमे विकुक्षिस्तेनैव वर्त्मना निवर्तमानः तं देशमाजगाम। कृतासनपरिग्रहन्तु तं प्रीत्या सावित्री पप्रच्छ 'आर्य! कच्चित् कुशली कुमारः!' इति। सोऽब्रवीत्'—आयुष्मति!

कुशली, स्मरति च भवत्योः केवलम्, अमीषु दिवसेषु तनीयसीम् तनुं बिभर्ति; अन्वागमिष्यत्येव मालतीति नाम्ना बाणिनी वार्तां वो विज्ञातुम्; इति। एवं विज्ञाप्य विकुक्षिः उच्चावचैरालापैः सुचिरं स्थित्वा यथाभिलषितं देशमयासीत्। अपरेद्युरुद्यति भगवति सहस्ररश्मौ शोणमुत्तीर्यायान्ती मालतीं समदृश्यत। सरस्वत्याः समीपमुपसृत्य दूरादेवावनतेनमूर्ध्ना प्रणम्य बभाषे—'देवि! विज्ञाप्यं नः किञ्चिदस्ति रहसि। अतो मुहूर्तमत्रधानं दातुमर्हसि, इति। सरस्वत्येवमुवाच 'किमेवमभिदधासि? विधेयास्मि ते, ब्रूहि विवक्षितम्, इति। सात्ववादीत्—देवि! यदैव दृष्टासि देवेन, तत एवारभ्यायं बलवता कामेन बाध्यते। तदहं देवस्य प्राणरक्षार्थमर्थये अत्रभवतीम्, इति। सरस्वति प्रत्यवादीत्—अयि! न शक्नोमि बहु भाषितुम्। एषास्मि ते वचसि स्थिता, इति। मालती तु प्रहर्षपरवशा प्रणम्य प्रजविना तुरगेण ततार शोणम्; अगाच्च दधीचमानेतुं च्यवनाश्रमपदम्। सरस्वती तु सखीस्नेहेन सावित्रीमपि विदितवृत्तान्तामकरोत्।

अथास्तमुपगतवति भगवति गभस्तिमति आजगाम मालतीद्वितीयो दधीचः। आगत्य च हंसगद्गदया गिरा कृतसंभाषणः 'सरस्वत्या सह रममाणः एकं दिवसमिवानयत्संवत्सरम्। अथ सरस्वती बभार गर्भम् असूत सर्वलक्षणा-

भिरामं तनयम् । तस्मै च जातमात्रायैव सम्यक् सरहस्याः सर्वे वेदाः सर्वाणि शास्त्राणि सकलाश्च कलाः मत्प्रसादात् स्वयमाविर्भविष्यन्तीति वरमदात् । अथ पितामहादेशात् समं सावित्र्या ब्रह्मलोकमारुरोह ।

गतायाञ्च तस्यां दधीचः भार्गववंशसंभूतस्य भ्रातुर्ब्राह्मणस्य जायामक्षमालाभिधानाम् मुनिकन्यकाम् आत्मसूनोः संवर्धनाय नियुज्य विरहातुरः तपसे वनमगात् । यस्मिन्नेवावसरे सरस्वत्यसूत तनयं, तस्मिन्नेवाक्षमालापि सुतं प्रसूतवती । सा तु तौ निर्विशेषं शिशू समवर्धयत् । एकस्तयोः सारस्वताख्य एवाभवत् । द्वितीयोपि वत्सनामाभवत् । आसीच्च तयोः सोदर्ययोरिव स्पृहणीया प्रीतिः । अथ सारस्वतो मातुर्महिम्ना यौवनारम्भ एवाविर्भूताशेषविद्यः, सवयसि वत्से समस्तमेव प्रदेशे वाङ्मयं सञ्चारयामास । कृतदारपरिग्रहस्यास्य तस्मिन्नेव प्रदेशे प्रीतिकूटनामानं निवासमकरोत् । स्वयं तु आषाढ़ी कृष्णाजिनी वल्कली मेखली च भूत्वा तपस्यतो जनयितुरेव जगामान्तिकम् ।

अथ वत्सात् प्रावर्तत विपुलो वंशः यस्यमादजायन्त वात्स्यायना नाम मुनयः । अथ बहुषु कालेषु अवतीर्णे कलौ, तस्मिन् वात्स्यायनकुले कुवेरनामा द्विजो जन्म लेभे । तस्याभवन् अच्युतः ईशानः, हरः, पाशुपतश्चेति चत्वार-

स्तनयाः । तत्र पाशुपतस्य एक एवार्थपतिरिति नाम्ना महात्मा सूनुरभवत् । सोऽजनयत् भृगुं हंसं शुचिं कविं महीदत्तं धर्मं जातवेदसं चित्रभानुं त्र्यक्षम् अहिदत्तं विश्वरूपञ्च इत्येकादश पुत्रान् । अलभत चित्रभानुस्तेषां मध्ये राजदेव्यभिधानायां ब्राह्मण्यां बाणमात्मजम् । स बाल एव विधिवशात् व्ययुज्यत जनन्या । जातस्नेहस्तु नितरां पितैवास्य मातृताम् अकरोत् । अकृतोपनयनादिक्रियाकलापस्य समावृत्तस्य चतुर्दशवर्षदेशीयस्यास्य पितापि अस्तमगात् । संस्थिते पितरि महता शोकेन दिवानिशं दह्यमानहृदयः कथं कथमपि कतिपयान् दिवसान् आत्मगृह एवानैषीत् । अथ शनैः शनैः विरलतां गते अविनयनिदाने स्वातंत्र्ये वर्तमानः शैशवोचितान्यनेकानि चापलान्याचरन् इत्वरो बभूव अभवंश्चास्य वयसा समानाः बहवः सुहृदः सहायाश्च ।

स एतैश्चान्यैश्चानुगम्यमानः देशान्तरावलोकयन् कौतुकाक्षिप्तहृदयः सत्स्वपि पितृपितामहोपात्तेषु विभवेषु, सति चाविच्छिन्ने विद्याप्रसंगे, गृहान्निरगात् । अगाच्च स्वैरिणा नवयौवनेन महतामुपहास्यताम् । अयं शनैः शनैः मनोहराणि अत्युदाराणि राजकुलानि वीक्षमाणः बहूनि गुरुकुलानि सेवमानः, पुनरपि आत्मवंशोचितां वैपश्चितीं प्रकृतिमभजत

महतश्च कालात् तामेव भूयो जन्मभुवमाजगाम । यत्र चाप्तैरभिनन्दितागमनः मित्रमंडलमध्यगतः चिरदृष्टानां बान्धवानां भवनानि परिभ्रमन् प्रीयमाणः सुखमासांचक्रे ।

कदाचिदत्युग्रे ग्रीष्मसमये स्वगृहावस्थितस्यास्य भुक्तवतः पराह्णसमये भ्राता पारशवश्चन्द्रसेननामा प्रविश्याकथयत्—"एष खलु महाराजाधिराजपरमेश्वरश्रीहर्षदेवस्य भ्रात्रा कृष्णनाम्ना भवतामन्तिकं प्रहितः दूतः द्वारमध्यास्ते" इति । सोऽब्रवीत् —'आयुष्मन् ! अविलम्बितं प्रवेशयैनम्' इति । अथ तेनानीयमानं लेखहारकं प्रविशन्तमद्राक्षीत्, अप्राक्षीच्च दूरादेव—"भद्र ! भद्रं तत्रभवतः कृष्णस्य" इति । स च 'भद्रम्, इत्युक्त्वा प्रणम्य नातिदूरे समुपाविशत् । विश्रान्तश्च 'एष खलु स्वामिनो लेखः प्रहितः' इति विमुच्यार्पयत् । अथ बाणः सादरं गृहीत्वा स्वयमेवावाचयत् "मेखलकात् संदिष्टमवधार्य फलप्रतिबन्धी धीमद्भिरपहरणीयः कालातिपातः इत्येतावदत्रार्थजातम् इतरत् वार्तासंवादनमात्रकम्" इति । अवधृतलेखार्थश्च समुत्सारितपरिजनः संदेशं पृष्टवान् । मेखलकस्त्ववादीत्—'एवमाह मेधाविनं स्वामी "जानात्येव मान्यः यथा एकदेशनिवासः दर्शनाभ्यासः परोक्षोपकारणं वा स्नेहस्य हेतवः । त्वयि तु विना कारणेन अदृष्टेऽपि प्रत्यासन्ने बन्धाविव किमपि स्निह्यति मे हृदयम् । भवन्तमन्तरेणान्यथा चक्रवर्ती दुर्जनैः

ग्राहित आसीत्। न च तत्तथा। शिशुचापलवर्तितया च भवतः केनचिदसहिष्णुना यत्किञ्चिदसदृशमुदीरितम्। इतरो लोकस्तथैव तद् गृह्णाति, वक्ति च। बहुमुखश्रवण-निश्चलीकृतनिश्चयः किं करोतु पृथिवीपतिः। तत्वान्वेषिभिश्चास्माभिः दूरस्थितोपि प्रत्यक्षीकृतोसि। विज्ञप्तश्चक्रवर्ती त्वदर्थम्, यथा—'प्रायेण प्रथमे वयसि सर्वस्यैव चापलैः शैशवमपराधीति' तथेति प्रतिपन्ने स्वामिना। अतो भवता राजकुलमकृतकालक्षेपमागन्तव्यम्" इति। श्रुत्वैतत् तमेव चन्द्रसेनं समादिशत्—'कृतकशिपुं विश्रान्तसुखिनमेनं कारय' इति।

अथ गते तस्मिन् पर्यस्ते च वासरे कृतसन्ध्योपासनः शयनीयमगात्। अचिन्तयच्चैकाकी 'किं करोमि ? अन्यथा संभावितोऽस्मि राज्ञा निर्निमित्तबन्धुना सन्दिष्टमेवं कृष्णेन। अवश्यं गन्तव्यम्। सर्वथा भगवान् पुरारातिः गतस्य मे सर्वं सांप्रतमाचरिष्यति' इत्यवधार्य गमनाय मतिमकरोत्।

अथान्यस्मिन्नहनि उत्थाय प्रातरेव स्नात्वा, धृतधवल-दुकूलवासाः, गृहीताक्षमालः, प्रास्थानिकानि सूक्तानि बहुशः समावर्त्य, देवदेवस्य विरूपाक्षस्य पूजां विधाय, भगवन्तमाशुशुक्षणिं हुत्वा, दत्त्वा द्युम्नं[1] यथाविद्यमानं द्विजेभ्यः शुक्लाङ्गरागः शुक्लमाल्यः, मालत्याख्यया पितुः कनीयस्या स्वस्रा कृतसकल

१—द्युम्नम्—धनम्।

गमनमङ्गलः प्रथमचलितदक्षिणचरणः प्रीतिकूटान्निरगात्। प्रथमेऽहनि घर्मकालकष्टं निरुदकं मल्लकूटनामानं ग्राममगात्। तत्र हृदयनिर्विशेषेण भ्रात्रा सुहृदा च जगत्पतिनाम्ना संपादितसपर्यः सुखमवसत्। अथापरेद्यु रुत्तीर्य भगवतीं भागीरथीम् यष्टिगृहकनाम्नि वनग्रामके निशामनयत्। अन्यस्मिन् दिवसे स्कन्धावारं उपमणितारं कृतसंनिवेशमाससाद। अतिष्ठच्च नातिदूरे राजभवनस्य। मेखलकस्तु "तिष्ठतु तावत् क्षणमत्रैव महाभाग" इति तमभिधाय अप्रतिहतः पुरं प्राविशत्। अथ स मुहूर्तादिव वेत्रपाणिना पुरुषेणानुगम्यमानः निर्गत्यावोचत्—'एष खलु देवस्य पारियात्रनामा दौवारिकः। समनुगृह्णातु भवानेनमनुरूपया' इति प्रतिपत्त्या। दौवारिकः समुपसृत्य कृतप्रणामः मधुरया गिरा सविनयमभाषत—'आगच्छत प्रविशत दर्शनाय कृतप्रसादो देव, इति। बाणस्तु 'धन्योऽस्मि' इत्युक्त्वा तेनोपदिश्यमानमार्गः प्राविशदभ्यन्तरम्। समतिक्रम्य त्रीणि कक्ष्यान्तराणि चतुर्थेऽजिरे स्थितम् राजलक्ष्म्या विराजमानं चक्रवर्तिनं हर्षमद्राक्षीत्—दृष्ट्वा च समुपसृत्य उपवीती स्वस्तिशब्दमकरोत्।

राजा तु तं दृष्टवापृच्छत्—'एष स बाण' इति। 'यथाज्ञापयति देवः सोऽयम्' इति विज्ञापितो दौवारिकेण, न तावदेनमकृतप्रसादः पश्यामीति चक्षुः परिवृत्य पृष्ठतो निषण्णस्य मालवराजसूनोरकथयत् "महानयं भुजङ्ग" इति।

अथ बाणो मुहूर्त्तमिव तूष्णीं स्थित्वा व्यज्ञापयत्, 'देव! अविज्ञाततत्त्व इव किमेवमाज्ञापयसि ?. नार्हसि मामन्यथा संभावयितुम्। ब्राह्मणोऽस्मि जातः सोमपायिनां वंशे वात्स्यायनानाम्। यथाकालमुपनयनादयः कृताः संस्काराः। सम्यक् पठितः साङ्गो वेदः। श्रुतानि यथाशक्ति शास्त्राणि। दारपरिग्रहादभ्यागारिकोऽस्मि। का मे भुजङ्गता ? लोकद्वयाविरोधिभिस्तु चापलैः शैशवमशून्यमासीत्। अत्रानपलापोस्मि। 'सर्वथा कालेन मां ज्ञास्यति स्वामी स्वयमेव' इत्यभिधाय तूष्णीमभूत्। भूपतिरपि एवमस्माभिः श्रुतमित्यभिधाय तूष्णीमेवाभवत्, संभाषणासनदानादिना तु प्रसादेन नैनमन्वग्रहीत्। केवलं स्नेहगर्भेण दृष्टिपातमात्रेण अन्तर्गता प्रीतिमकथयत्। अस्तोन्मुखे सवितरि विसर्जितराजलोकः अभ्यन्तरं प्राविशत्। बाणोऽपि निर्गत्य निवासस्थानमगात्। अकरोच्च चेतसि 'अतिदक्षिणः खलु देवो हर्षः यदेवं कुपितोऽपि मनसा स्निह्यत्येव मयि; इच्छति च मां गुणवन्तम्; सर्वथा करोमि तथा यथा यथावस्थितं जानाति मामयं कालेन' इत्येवमवधार्य अपरेद्युर्निष्क्रम्य कटकात् सुहृदां बान्धवानाञ्च भवनेषु तावदतिष्ठत् यावदस्य स्वयमेव गृहीतस्वभावः पृथिवीपतिः प्रसादवानभूत्। अविशच्च

पुनरपि नरपतिभवनम्। स्वल्पैरेवाहोभिः परमप्रीतेन नरेन्द्रेण प्रसादस्य परां कोटिमानीयत।

अथ कदाचित् शरत्समयारम्भे राज्ञः समीपात् बाणः बन्धून् द्रष्टुं पुनरपि तं ब्राह्मणाधिवासमगमत्। तत्र समुपलब्धभूपालसंमानैः ज्ञातिभिः श्लाघ्यमानः बन्धुमध्यवर्ती परं मुमुदे। अथ कदाचित् भुक्तवन्तं तं ज्ञातयः पर्यवारयन्। तत्र बाणस्य पितृव्यपुत्राः चत्वारो भ्रातरः बभूवुः। तेषु कनीयान् श्यामलो नाम सप्रणयमिदं बभाषे 'तात! सुगृहीतनाम्नः पुण्यराशेः महाराजहर्षस्य चरितमादितः प्रभृति श्रोतुमिच्छामः' इति। बाणस्तु विहस्याब्रवीत् 'न युक्त्यनुरूपमभिहितम्। शक्याशक्यपरिसंख्यानं न कृतम्। क्व परिमितवर्णवृत्तयः कतिपये शब्दाः? क्व संख्यातिगास्तद्गुणाः? सर्वज्ञस्याप्ययमविषयः किमुतास्मद्विधस्य? कः खलु पुरुषायुषशतेनापि शक्नुयादविकलमस्य चरितं वर्णयितुम्? एकदेशे तु यदि कुतूहलं वः सज्जा वयम्। इयमधिगतकतिपयाक्षरा जिह्वा क्वोपयोगं गमिष्यति। भवन्तः श्रोतारः, वर्ण्यते हर्षचरितम्, किमन्यत्?, इत्युक्त्वा तेषां पुरो हर्षचरितं कथयितुमारेभे।

अस्ति श्रीकण्ठो नाम जनपदः, तत्र च स्थाण्वीश्वराख्यो जनपदविशेषः। तत्र च राजा पुष्पभूतिरिति नाम्ना बभूव।

तस्य केनचिदनुपदिष्टा सहजैव शैशवादारभ्य भगवति भवानीवल्लभे भूयसी भक्तिरभूत्। परममाहेश्वरः स भूपालः लोकतः शुश्राव भगवन्तं दाक्षिणात्यं भैरवाचार्यनामानं महाशैवम्। श्रवणसमकालमेव तस्मिन् भैरवाचार्ये गरीयसीं बबन्ध भक्तिम्। आचकांक्ष च सर्वथाप्यस्य दर्शनम्।

अथ कदाचित् पर्यस्ते वासरे राजानमुपसृत्य प्रतीहारी विज्ञापितवती—'देव! द्वारि परिव्राडास्ते। कथयति च भैरवाचार्यवचनात् देवमनुप्राप्तोऽस्मीति' इति। राजा तु तत्श्रुत्वा सादरं 'क्वासौ प्रवेशयैनम्'-इत्यब्रवीत्। तथा चाकरोत् प्रतिहारी। आगतं च मस्करिणं भूपतिरुचितम् उपचचार। पप्रच्छ च 'क्व भैरवाचार्य' इति। परिव्राट् तमुपनगरं सरस्वतीतटवनावलम्बिनि शून्यायतने स्थितमाचचक्षे। भूयश्च बभाषे—'अर्चयति च महाभागं भगवानाशीर्वचसा' इत्युक्त्वा भैरवाचार्यप्रहितानि पञ्च रत्नवन्ति राजतादि पुण्डरीकाणि उपनिन्ये। नरपतिस्तु दाक्षिण्यमनुरुध्यमानस्तानि जग्राह। जगाद च—'श्वो द्रष्टास्मि भगवन्तम्'। इति उक्त्वा मस्करिणं व्यसर्जयत्।

अपरेद्युश्च प्रातरेवोत्थाय वाजिनमधिरुह्य भैरवाचार्यं द्रष्टुं प्रतस्थे। गत्वा किञ्चिदन्तरं तदीयमेवाभिमुखमापतन्तमन्यतमं शिष्यमद्राक्षीत्। अप्राक्षीच्च क्व भगवानास्ते

सोऽकथयत्—'अस्य जीर्णमातृगृहस्योत्तरेण बिल्ववाटिका-मध्यास्ते' इति । गत्वा च तं प्रदेशमवततार । प्रविवेश च बिल्ववाटिकाम् । अथ महतः कार्पटिकवृन्दस्य मध्ये, प्रातरेव स्नातमनुष्ठिताग्निकार्यम् व्याघ्रचर्मण्युपविष्टम् भगवन्तं साक्षादिव विरूपाक्षं भैरवाचार्यं ददर्श । भैरवाचार्यस्तु दूरादेव राजानं दृष्ट्वा प्रत्युद्गम्य, श्रीफलोपायनं समर्प्य, गम्भीरया गिरा स्वस्तिशब्दमकरोत् । नरपतिरपि दूरावनतः प्रणामं चकार । आचार्योऽपि 'आगच्छ, अत्रोपविश' इति आत्मीयं शार्दूलचर्मादर्शयत् । राजा तु सप्रश्रयं व्याजहार—'भगवन् ! अभूमिरयमुपचाराणाम् । अलमतियन्त्रणया । माननीयश्च गुरुवन्नोल्लङ्घनमर्हति गुरोरासनम् । आसताञ्च भवन्त एवात्र' इति व्याहृत्य परिजनोपनीते वाससि निषसाद । भैरवाचार्योऽपि पूर्ववत्तदेव व्याघ्राजिनमभजत । आसीने च राजनि शिष्यजनेन समुचितमघ्र्यादिकं कारयामास । राजा तु विविधाभिः कथाभिः चिरं स्थित्वा गृहमगात् ।

अन्यस्मिन् दिवसे भैरवाचार्यो राजानं द्रष्टुं ययौ । तस्मै स राजा सपरिजनं सकोशमात्मानं निवेदितवान् । स च विहस्य "तात क्व विभवाः, क्व वयं वनवर्धिताः ? भवादृशा एव भाजनं भूतेः' इत्युक्त्वा स्थित्वा च कञ्चित्कालं जगाम । परिव्राट् तेनैव क्रमेण पञ्च पञ्च राजतानि पुण्डरीकाणि उपायनीचकार । एकदा तु श्वेतकर्पटा-

वृतं किमप्यादाय प्राविशत् । उपविश्य पूर्ववत् स्थित्वा मुहूर्तमब्रवीत्—'महाभाग ! भवन्तमाह भगवान् यथा— अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणः । तेन ब्रह्मराक्षस-हस्तात् अट्टहासनामा महासिरपहृतः । सोऽयं भवद्भुज-योग्यो गृह्यताम्' इत्यभिधाय अपहृतकर्पटाच्छादनात् परि-वारात् आचकर्ष कृपाणम् । अवनिपतिस्तु तं करेण गृहीत्वा सुचिरं ददर्श । सन्दिदेश च—वक्तव्यो भगवान् 'परद्रव्य-ग्रहणदुर्विदग्धममि मे मनः युष्मद्विषये न शक्नोति वचनव्यतिक्रमाचरितुम्' इति । परिव्राट् तु गृहीते तस्मिन् परितुष्टः "स्वस्ति भवते, साधयामः" इत्युक्त्वा निरयासीत् ।

अथ व्रजत्सु दिवसेषु एकदा भैरवाचार्यो राजानमुपह्वरे जगाद—'तात ! महाकालहृदयाख्यं महामन्त्रं जपकोट्या सेवितवानस्मि । यस्य वेतालसाधनावसाना सिद्धिः । अस-हायैश्च सा दुरापा । त्वञ्चालमस्मै कर्मणे । त्वयि च गृहीतभरे भविष्यन्त्यपरे सहायास्त्रयः । एकः स एवास्माकं टीटिभनामा बालमित्रं मस्करी, यो भवन्तमुपतिष्ठते । द्वितीयः स पातालस्वामी । अपरो मच्छिष्य एव कर्णताल-नामा द्राविडः । यदि साधु मन्यसे गृहीताट्टहासः प्रतिष्ठस्व' इति । अथ नरेन्द्रः समभाषत 'भगवन् ! परमनुगृहीतोऽस्मि अनेन निदेशेन' इति । ननन्द च तेन नरेन्द्रव्याहृतेन

भैरवाचार्यः । चकार च संकेतम् 'अस्यामेवागामिन्यां असितपक्षचतुर्दशीक्षपायां इयत्यां वेलायां अमुष्मिन् महाश्मशानसमीपभाजि शून्यायतने शस्त्रद्वितीयेनायुष्मता द्रष्टव्या वयम्' इति ।

अथातिक्रान्तेष्वहःसु प्राप्तायाञ्च तस्यामेव कृष्ण-चतुर्दश्याम् शैवेन विधिना दीक्षितः क्षितिपः नियम-वानभूत् । ततः परिणते दिवसे विगाढायां शर्वर्याम् सुप्तजननिश्शब्दस्तिमिते निशीथे, राजा सान्तःपुरं परिजनं वञ्चयित्वा, वामकरेण उत्खातं खड्गमट्टहासमादाय, एकाकी नगरात् निरगात् । अगाच्च तमुद्देशम् । अथ प्रत्युज्जग्मुस्ते त्रयः टीटिभकर्णतालपातालस्वामिनः । निवेदितवन्त-श्चात्मानम् । अवनिपतिस्तु 'कोऽत्र क' इति त्रीनपृच्छत् । आचचक्षिरे च स्वं स्वं नाम त्रयोऽपि ते । तैरेव चानुगम्यमानो जगाम तां समुपकल्पितसर्वोपकरणां भीषणां साधनभूमिम् । तस्याञ्च भस्मना लिखितस्य महतो मंडलस्य मध्ये स्थितम् उत्तानशयस्य शवस्योपरि उपविश्य जातजातवेदसि मुख-कुहरे प्रारब्धाग्निकार्यम् , कृष्णोष्णीषम् , कृष्णाङ्गरागं, कृष्ण-प्रतिसरं कृष्णवाससं मुखेन किमपि जपन्तं कृष्णतिलाहुति-करं भैरवाचार्यमपश्यत् । उपसृत्य चाकरोन्नमस्कारम् । अभिनन्दितश्च तेन स्वव्यापारमन्वतिष्ठत् । अत्रान्तरे

पातालस्वामी शातक्रतवीमाशामङ्गीचकार । कर्णतालः कौबेरीम् । परिव्राट् प्राचेतसीम् । राजा तु त्रैशङ्कवेन ज्योतिषांकितां ककुभमलंकृतवान् ।

एवंचावस्थितेषु तेषु दिक्पालेषु गलत्यर्धरात्रिसमये, मण्डलस्य नातिदवीयस्युत्तरेण अकस्मात् क्षितिरदीर्यत । सहसैव तस्माद्विवरात् कुवलयश्यामलः पुरुष उज्जगाम । 'जगाद च विहस्य' भो विद्याधरीश्रद्धाकामुक ! किमयं विद्यावलेपः ? सहायमदो वा ? यदस्मै जनाय अविधाय बलिं बालिश इव सिद्धिमभिलषसि । का ते दुर्बुद्धिरियम् एतावता कालेन क्षेत्राधिपतिरस्य मन्नाम्नैव लब्धव्यपदेशस्य देशस्य नागतस्ते श्रोत्रोपकण्ठं श्रीकण्ठनामा नागोऽहम् । भूनाथोऽप्ययमनाथस्तपस्वी, यस्त्वादृशैः शैवपदैरुपकरणीक्रियते । सहस्वेदानीं सहामुना दुर्नरेन्द्रेण दुर्णयस्य फलम्, इत्यभिधाय, निष्ठुरैः प्रकोष्ठप्रहारैः त्रीनपि टीटिभप्रभृतीन् अपातयत् । अथ नरनाथः सावज्ञमवादीत्—'अरे काकोदर ! मयि स्थिते राजहंसे न जिह्वेपि बलिं याचितुम् । अमीभिः किं वा परुषभाषितैः भुजे वीर्यं निवसति न वाचि, प्रतिपद्यस्व शस्त्रम्, अयं न भवसि । अगृहीतहेतिष्वशितो मे भुजः प्रहर्तुम्' इति । नागस्तु अनादृततरम् "एहि, किं शस्त्रेण, भुजाभ्यामेव मनज्मि

भवतो दर्पम्" इति अभिधायास्फोटयामास । नरपतिरपि निरायुधमायुधेन लज्जमानो जेतुम् उत्सृज्य खड्गम् । बबन्ध बाहुयुद्धाय कक्ष्याम् । युयुधाते च तौ शिलास्तम्भैरिव पतद्भिः बाहुदण्डैः न चिराच्च पातयामास भूतले भुजङ्गं भूपतिः । जग्राह च केशेषु । उच्चखान शिरः छेत्तुमट्टहासम् । मालान्तरेणास्य यज्ञोपवीतम् दृष्ट्वा तं विससर्ज ।

अनन्तरञ्च अतिबहुलां ज्योत्स्नां ददर्श । शरदि विकसतां कमलवनानामिव आमोदमजिघ्रत् । झटिति नूपुरशब्दमश्रृणोत् । व्यापारयामास शब्दानुसारेण दृष्टिम् । अथ तामरसहस्तां स्त्रियमपश्यत् । पप्रच्छ च भद्रे! कासि ? किमर्थमिहागतासि ?' इति । सात्वभाषत 'वीर, विद्धि मां नारायणोरःस्थलविहारिणीं श्रियम् । प्रीतास्मि तवामुना शौर्यरसेन । याचस्व, ददामि ते वरम्' इति । राजा तु तां प्रणम्य स्वार्थविमुखः भैरवाचार्यस्य सिद्धिं ययाचे । लक्ष्मीस्तु देवी प्रीततरहृदया 'एवमस्तु' इत्यब्रवीत् । अवादीच्च पुनः 'भवान् भुवि महतो राजवंशस्य कर्ता भविष्यति, यस्मिन्, उत्पत्स्यते हर्षनामा चक्रवर्त्ती ।' इति वचसोऽस्ते तिरोबभूव । भूमिपालस्तु तदाकर्ण्यातिमात्रमप्रीयत । भैरवाचार्योऽपि तस्या देव्या वचने सद्य एव किरीटी कुण्डलीहारी भूत्वा विद्याधरत्वमवाप । प्रोवाच च—'राजन् ।

इच्छामि येन केनचित् कार्यलवोपपादनोपयोगेन स्मारयितुमात्मानमिति। राजा तु 'भवतिसद्ध्यैव परिसमाप्तकृत्योस्मि। साधयतु मान्यो यथासमीहितं स्थानम्.' इति, प्रत्याचचक्षे। अथ स टीटिभादीन् सुहृदं समालिङ्ग्य 'सर्वथा स्मर्तव्या वयमित्यभिधाय गगनतलमुत्पपात। श्रीकण्ठोऽपि राजन्! पराक्रमक्रीतः कर्तव्येषु नियुज्यतामयं जनः' इत्यभिधाय राज्ञानुमोदितः तदेव भूयो भूविवरं प्रविवेश। नरपतिस्तु क्षीणभूयिष्ठायां क्षपायां त्रीनपि टीटिभादीन् गृहीत्वा युद्धव्यतिकरमलीमसानि अङ्गा न वनवापीपयसि प्रक्षाल्य नगरं विवेश। कतिपयदिवसापगमे च परिव्राट् भूभुजा वार्यमाणोपि वनं ययौ। पातालस्वामिकर्णतालौ तु शौर्यानुरक्तौ तमेव सिषेवाते।

अथ तस्माद् पुष्पभूतेः निर्जगाम राजवंशः। तत्रोदपादि प्रतापशील इति प्रथितापरनामा प्रभाकरवर्धनो नाम राजा। तस्य च यशोवती नाम महिषी बभूव। निसर्गत एव स भूपतिरादित्यभक्तो बभूव। प्रतिदिनमुदये स्नातः सितदुकूलधारी प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा रक्तकमलषण्डेन दिनकरस्य अर्घं ददौ। अजपच्च प्रत्युषसि मध्यन्दिने दिनान्ते च अपत्यहेतोः मन्त्रमादित्यहृदयम्। अथ कदाचित् ग्रीष्मसमये स राजा यदृच्छया हर्म्यस्य पृष्ठे सुष्वाप। पार्श्वे चास्य द्वितीय शयने देवी यशोवती शिश्ये। परिणतप्रायायान्तु श्यामायां देवी

यशोवती सहसैव "आर्यपुत्र! परित्रायस्व परित्रायस्व" इति भाषमाणा उदतिष्ठत्। तेन ध्वनिना प्रबुद्धो राजा "देवि! न भेतव्यं न भेतव्यम्" इत्यभिदधानो वेगेनोत्पपात। सर्वासु च दिक्षु विक्षिपन् चक्षुः यदा नाद्राक्षीत् किञ्चिदपि, तदा पप्रच्छ तां भयकारणम्। सा समभाषत—"आर्यपुत्र! जानामि स्वप्ने भगवतः सवितुर्मण्डलात् निर्गत्य द्वौ कुमारकौ तेजोमयौ गृहीतशस्त्रौ कन्यकया एकया चानुगम्यमानौ क्षितितलमवतीर्णौ। तौ च मे विलपन्त्याः शस्त्रेणोदरं विदार्य प्रवेष्टुमारब्धौ। प्रतिबुद्धास्मि चार्यपुत्रं विक्रोशन्ती वेपमानहृदया" इति। एतस्मिन्नेव काले रराण प्रभातशङ्खः। नरपतिस्तु तत्श्रुत्वा प्रीयमाणेनान्तःकरणेन तामवादीत् 'देवि! मुदोवसरे विषीदसि। पूर्णा नो मनोरथाः। प्रसन्नस्ते भगवानंशुमाली। न चिरेणैव अपत्यत्रयलाभेनानन्दयिष्यति भवतीम्' इति।

ततः समतिक्रान्ते कस्मिंश्चित्काले; देव्यां यशोवत्यां देवो राज्यवर्धनः प्रथममेव संबभूव गर्भे। अवतीर्णे च दशमे मासि असूत देवं राज्यवर्धनम्। अथान्यस्मिन् अतिक्रान्ते कस्मिंश्चित् कालांशे गर्भे संबभूव हर्षः। ततः ज्येष्ठामूलीये मासि बहुलपक्षद्वादश्याम् व्यतीते प्रदोषसमये राज्ञो द्वितीयपुत्रजन्मोत्सवो महान् प्रावर्तत। अथ पुनरप्यतिक्रामति काले, धात्रीकराङ्गुलिलग्ने पञ्चपाणि पदानि

प्रयच्छति हर्षे, षष्ठं वर्षम् अवतरति राज्यवर्धने, देवी यशोवती गर्भेणाधत्त राज्यश्रियम् । पूर्णेषु प्रसवदिवसेषु प्रसूतवती दुहितरम् । अस्मिन्नेव तु काले देव्याः यशोवत्याः भ्राता सुतमष्टवर्षदेशीयं भण्डिनामानमनुचरं कुमारयोः अर्पितवान् । अवनिपतेश्च तस्योपरि पुत्रयोस्तुल्यं दर्शनमासीत् । राजपुत्रावपि सकलजीवलोकहृदयानन्ददायिनौ क्रमेण वर्धमानौ यौवनमवतेरतुः । ततश्च मालवराजपुत्रौ कुमारगुप्तमाधवगुप्तौ तयोरनुचरौ बभूवतुः । अथ राज्यश्रीरपि नृत्यगीतादिषु सकलासु कलासु प्रतिदिनमुपचीयमानपरिचया शनैश्शनैरवर्धत । परिमितैरेव दिवसैः यौवनम् आरुरोह । दूतप्रेषणादिभिश्च तां ययाचिरे राजानः । राजा तु तां सकलभुवननमस्कृते मौखरे वंशे समुत्पन्नस्य अवन्तिवर्मणः सूनवे ग्रहवर्मणे प्रादात् । विभवानुरूपेषु विवाहमहोत्सवेषु सम्यगुपचरितः ग्रहवर्मा श्वशुरकुले आनन्दमयानि दश दिनानि नीत्वा कथं कथमपि नृपेण विसर्जितः वध्वा सह स्वदेशमगमत् ।

अथ कदाचित् राजा राज्यवर्धनं कवचहरम् आहूय, हूणान् हन्तुम् उत्तरापथं प्राहिणोत् । प्रयान्तञ्च तं देवो हर्षः कतिचित् प्रयाणकानि तुरङ्गमैः अनुवव्राज । प्रविष्टे च कैलासप्रभाभासिनीं ककुभं भ्रातरि तुषारशैलोपकण्ठेषु क्रीडन्

मृगयाम्; कतिपयान्यहानि बहिरेव व्यलम्बत। चकार च स्वल्पीयोभिरेव दिवसैः निश्श्वापदान्यरण्यानि । एकदा तु वासतेय्याः तुरीये यामे प्रत्युपस्येव स्वप्ने दुर्निवारेण दवहुतभुजा दह्यमानं केसरिणम् अद्राक्षीत् । तस्मिन्नेव दावदहने समुत्सृज्य शावकान् उत्प्लुत्य चात्मानम् पातयन्तीम् सिंहीम् अपश्यत् । प्रबुद्धस्य चास्य मुहुर्मुहुर्दक्षिणेतराक्षि पस्पन्दे । गात्रेषु चाकस्मादेव वेपथुः विपप्रथे । अह्नि च तस्मिन् शून्येनैव चेतसा चिक्रीड मृगयाम् । आरोहति च हरितहये मध्यमहः, भवनम् आगत्य, सशङ्क एव तस्थौ।

अथ दूरादेव लेखगर्भया चीरचीरिकया रचितमुण्ड-मालम् शून्यहृदयतया समेऽपि वर्त्मनि स्खलन्तम् कुरङ्गक-नामानम् आयान्तम् अपश्यत्। स तु कृतप्रणामः समुपसृत्य लेखमुपनिन्ये । तञ्च देवो हर्षः स्वयमेवादायावाचयत् लेखार्थं गृहीत्वा तमभ्यधात्—कुरङ्गक ! किं मान्द्यं तात-स्येति। स आचचक्षे । 'देव ! दाहज्वरो महान्' इति। तच्चाकर्ण्य सहसा सहस्रधेवास्य हृदयं पफाल । कृताच-मनश्च जनयितुरायुष्कामः आत्मपरिबर्हमशेषम् ब्राह्मणसाद-करोत् । अभुक्त एवारुह्य तुरङ्गमम् एकाक्येव प्रावर्तत। बहुयोजनसंपिण्डितम् अध्वानम् एकेनैवाह्ना समलङ्घयत्। वहन्नेव च निन्ये निशाम्। अन्यस्मिन्नहनि मध्यंदिने स्कन्धा-

वारम् आससाद। क्रमेण च राजद्वारम् आगत्य तुरगादवतीर्णः अभ्यन्तरात् निष्क्रामन्तम् सुषेणनामानं वैद्यकुमारम् अप्राक्षीत्—'सुषेण ! अस्ति तातस्य विशेषो न वा' इति। सोऽब्रवीत्। नास्तीदानीम् ; यदि भवेत् कुमारं दृष्ट्वा' इति। श्रुत्वैतत् वेपमानहृदयः मन्दं मन्दमवाप तृतीयं कक्ष्यान्तरम्। तत्र च अतिनिश्शब्दे धवलगृहे स्थितम्, शयनीये विचेष्टमानम् पार्श्वोपविष्टया देव्या यशोवत्या शिरसि वक्षसि स्पृश्यमानम् पितरमद्राक्षीत्।

अवनिपतिस्तु दूरादेव दृष्ट्वा अतिदयितं तनयं, तदवस्थोऽपि प्रसार्य भुजौ एह्येहीत्याह्वयन् शरीरार्धेन शयनात् उदगात्। ससंभ्रमम् उपसृतश्चैनं बलादुरसि निवेश्य, अङ्गैरङ्गानि पीडयन्, कपोलेन कपोलमवघट्टयन्, गाढम् आलिलिङ्ग। कथं कथमपि चिराद्विमुक्तम् कृतनमस्कारम् आसीनञ्च शयनान्तिके विगतनिमेषेण चक्षुषा सुचिरं व्यलोकयत्।' पस्पर्श च पुनः पुनः वेपथुमता पाणितलेन क्षयक्षामकण्ठश्च कृतत्श्रु त्वादिवावादीत्—'वत्स ! कृशोऽसि' इति। भण्डिस्त्वकथयत्—'देव ! तृतीयमहः कृताहारस्याद्य' इति। तत्श्रु त्वा कथं कथमपि आयतं निश्श्वस्य उवाच—'वत्स ! जानामि त्वां पितृप्रियम्, त्वज्जन्मनैव कृतार्थोऽस्मि, निरभिलाषोऽस्मि जीवितव्ये, भिषगनुरोधः

पाययति माम् औषधम्, अतो नार्हस्यात्मानं शुचे दातुम्, उत्तिष्ठ, कुरु सर्वाः क्रियाः, कृताहारे च त्वयि स्वयम् उपयोक्ष्ये पथ्यम्' इति। एवमभिहितस्य चास्य नितरां शोकानलः संदुधुक्षे। क्षणमात्रं स्थित्वा पित्रा पुनराहारार्थमादिश्यमानः धवलगृहात् अवततार गत्वा स्वधाम विषलयानिव कतिचित् कवलान् अगृह्णात्। आचामंश्च अगृहीतताम्बूल एव सर्वान् आहूय वैद्यान् उपह्वरे 'किं विधेयमधुना' इति विषण्णहृदयः पप्रच्छ। ते तु व्यज्ञापयन्—'देव! धैर्यमवलम्बस्व। कतिपयैरेव वासरैः स्वस्थं श्रोष्यसि पितरम्' इति। तेषान्तु भिषजां मध्ये अष्टादशवर्षदेशीयः, गतः पारम् अष्टाङ्गस्यायुर्वेदस्य भूभुजा सुतनिर्विशेषं लालितः, रसायनो नाम वैद्यकुमारकः, देव! श्वः प्रभाते यथावस्थितमावेदयितास्मि' इत्यब्रवीत्।

•

गतेषु भिषक्षु क्षतधृतिः क्षपामुखे क्षितिपालसमीपमेव पुनरारुरोह। तत्र च 'दाहो महान्' इत्यादीन् पितुरालापन् अनवरतमाकर्णयन् जाग्रदेव निशामनैषीत्। उषसि चावतीर्य चरणाभ्यामेव स्वमन्दिरमाजगाम। तत्र च त्वरमाणः भ्रातुरागमनार्थं प्रजविनः उष्ट्रपालकान् प्राहिणोत्। अत्रान्तरे 'रसायनो वैद्यकुमारकः दुःखातिरेकेण पावकं प्रविष्टः' इति शुश्राव। तेन च प्लुष्ट इवान्तस्तापेन सर्वाणि कार्याणि

विसृज्य शयनीये निपत्य उत्तरीयवाससा सोत्तमाङ्गम् आत्मानम् अवगुण्ठ्य अतिष्ठत्।

अन्यस्मिन्नहनि समीपमस्य वेला नाम यशोवत्याः प्रतीहारी आगत्य विज्ञापितवती—'देव! परित्रायस्व, परित्रायस्व। जीवत्येव भर्तरि किमप्यध्यवसितं देव्या' इति। ततस्तदपरमाकर्ण्य त्वरमाणः अन्तः पुरमगात्। तत्र च मर्तुम् उद्यतानां राजमहिषीणाम् बहुविधान् आलापान् अशृणोत्। प्रविशन्नेव निर्यान्तीं गृहीतमरण-प्रसाधनां प्रत्यग्रस्नानार्द्रदेहां मातरं ददर्श। दूरादेव च बाष्पा-यमाणदृष्टिः अभ्यधात्—'अम्ब! त्वमपि मां मन्दपुण्यं त्यजसि। प्रसीद, निवर्तस्व' इत्यभिदधान एव चरणयोः न्यपतत्। देवी तु यशोवती तथा तिष्ठति पादनिहितशिरसि कनीयसि तनये कृतप्रयत्नापि वाष्पोत्पतनं निवारयितुं न शशाक। दूयमानमानसा च किञ्चिदुत्तानितं वदनेन्दुम् अंशुकपटान्तेन संछाद्य मुक्तकण्ठम् अतिचिरं प्राकृतप्रमदेव प्रारोदीत्। प्रशान्ते च मन्युवेगे सस्नेहम् उत्थापयामास सुतम्। हस्तेन चास्य प्ररुदितस्य क्षरन्तीं दृष्टिम् उन्ममार्ज। स्वयमपि प्रक्षाल्य मुखकमलं वासःशकले शुचिनि समुन्मृज्य पाणी सुतवदननिहितनयना चिरं स्थित्वा पुनः आयसे निश्वस्य अवादीत्।

'वत्स ! नासि न प्रियो निर्गुणो वा। मर्तुम् अविधवैव वाञ्छामि। मरणाच्च मे जीवितमेवास्मिन् समये साहसम्। अतिशीतलः पतिशोकानलादनलः। जीवन्तीमपि मां न स्प्रक्ष्यन्ति पुत्रराज्यसुखानि। यशसा स्थातुम् इच्छामि लोके, न वपुषा। तदहमेव त्वां प्रसादयामि, न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि, इत्युक्त्वा पादयोः अपतत्। स तु ससंभ्रमम् अपनीय चरणयुगलम्, अवनमिततनुः उदनमयन्मातरम्। दुर्निवारतां शुचः समवधार्य, कृतनिश्चयां तां ज्ञात्वा, तूष्णीम् अधोमुखोऽभवत्। देव्यपि यशोवती परिष्वज्य समाघ्राय शिरसि, निर्गत्य चरणाभ्यामेव अन्तःपुरात् सरस्वतीतीरं गत्वा, तत्र ज्वलितं पावकं प्रविवेश। हर्षोऽपि मातृमरणविह्वलः बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्। अपश्यच्च स्वल्पावशेषप्राणवृत्तिम् परिवर्त्यमानतारकं जनयितारम्। आश्लिष्यास्य पादपद्मौ विमुक्तारावः चिरं रुरोद। राजा तम् उपरुध्यमानदृष्टिः रुदितशब्देन प्रत्यभिज्ञाय शनैश्शनैः 'वत्स! नार्हस्येवं भवितुम्, कुलप्रदीपोऽसि' इति वदन्नेव अपुनरुन्मीलनाय निमिमील लोचने। अस्मिन्नेवान्तरे पूषापि तेजसा व्ययुज्यत। क्रमेण च प्रवृत्तायां सन्ध्यायां पूर्वस्यां दिशि दृश्यमाने चन्द्रमसि नरेन्द्रः सामन्तैः पौरैश्च पुरोहितपुरस्सरैः सरस्वतीं सरितं नीत्वा नरपतिसमुचितायां चितायां हुताशसंस्क्रियया यशश्शेषतामनीयत।

देवोऽपि हर्षः शोकमूकेन राजकुलसम्बद्धेन सकलेन लोकेन परिवृतः निर्व्यवधानायां धरण्याम् उपविष्ट एव तां निशीथिनीम् अखिलां जजागार। कथं कथमपि क्षयमियाय यामिनी। अथास्तमुपगते शशिनि दिवमारूढे सवितरि, राजकुलात् निर्जगाम। अगाच्च सरस्वतीतीरम्। तस्यां स्नात्वा पित्रे ददावुदकम्। अपस्नातश्च अनिष्पीडितमौलिरेव निःश्वासपरः निरातपत्रः चरणाभ्यामेव भवनमाजगाम। अथ पितृशोकविह्वलीकृतम् सर्वासु क्रियासु विमुखम् देवं हर्षम्, श्रुतिस्मृतीतिहासविशारदाः द्विजातयः, अधिगतात्मतत्त्वाः मस्करिणः, समदुःखसुखा मुनयः, संसारासारत्वकथनकुशलाः ब्रह्मवादिनः शोकापनयननिपुणाश्च पौराणिकाः, पर्यवारयन्। अनुनीयमानश्च तैः कथं कथमपि आहारादिकासु क्रियास्वाभिमुख्यम् अभजत। अथ 'तातस्य मरणम् उपश्रुत्यार्यः कथं भविष्यति' इति भ्रातरमेवानुचिन्तयन् तदागमनमुदीक्षमाणः तस्थौ।

अथ प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि, गतेष्वशौचदिवसेषु, नीतेषु तीर्थस्थानानि कीकसेषु, वनायविसर्जिते राजगजेन्द्रे, क्रमेण च मन्देष्वाक्रन्देषु, काव्यावशेषनाम्नि नरनाथे, देवो हर्षः अवनतमूकमुखेन बन्धुवर्गेणावेष्ट्यमानः बहुवासरान्तरितस्नानभोजनादिना परिजनेन परिवृतम् अतिकृशैरवयवैरावेद्यमानदुःखभारम्, प्रथीयसा बाष्पपयः-

प्रवाहेण महीम् अनवरतं सिञ्चन्तम् दुःखक्षामौ कपोलौ उद्वहन्तम् ज्येष्ठं भ्रातरम् आयान्तम् अपश्यत्। दूरादेव दृष्ट्वा देवो राज्यवर्धनः सुदूरप्रसारितेन दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्तकण्ठं रुरोद। सुचिराच्च कथं कथमपि निवृत्तनयनजलः पर्जन्य इव शरदि स्वयमेवोपशशाम। उपविष्टश्च परिजनोपनीतेन तोयेन चक्षुः अक्षालयत्। ताम्बूलिकोपस्थापितेन वाससा वदनम् उन्ममार्ज। तूष्णीमेव च चिरं स्थित्वोत्थाय स्नानभूमिमगात्। स्नात्वा च विस्रस्तकुन्तलं मौलिम् अनादरात् निष्पीड्य, चतुश्शालवितर्दिकायां विनिहितैकोपबर्हायाम् पर्यङ्किकायां निपत्य जोषम् अस्थात्। देवोऽपि हर्षः तथैव स्नात्वा धरणितलनिहितायां कुथायां प्रसारितमूर्तिः अदूर एवास्य तूष्णीमेव समवातिष्ठत।

अथ सर्वेषु प्रविष्टेषु राजसु राज्यवर्धनो हर्षदेवमुवाच—'तात! भूमिरसि गुरुनियोगानाम्। भवन्तम् एवंविधं विधेयं किमपि बिभणिषति मे हृदयम्। बालभावसुलभा वामता न लम्बनीया। मा कृथाः प्रत्यूहम् ईहितेऽस्मिन्। न खलु न जानासि लोकवृत्तम्। मान्धातरि मृते किं कृतं पुरुकुत्सेन। दिलीपे रघुणा, दशरथे रामेण, दुष्यन्ते भरतेन। तिष्ठन्तु तावदेते। तातेनैव पितरि परासुतां गते किं नाकारि राज्यम्।

यं किल शोकः समभिभवति तं कापुरुषम् आचक्षते शास्त्रविदः। स्त्रियो हि विषयः शुचाम्। तथापि किं करोमि। आस्पदं पितृशोकहुतभुजो जातोऽस्मि। मम हि भूभृति पर्यस्ते प्रणष्टं प्रज्ञानम्। विलीनं धैर्यम्। वर्धन्ते दुःखानि। सोऽहमिच्छामि मनसि लग्नं स्नेहमलमिदं प्रस्रवणाम्बुभिः क्षालयितुम् आश्रमपदे। तदाज्ञया गुरोः गृहाण मे राज्यचिन्ताम्। परित्यक्तं मया शस्त्रम्' इत्यभिधाय खड्गग्राहिणो हस्तात् आदाय निजं निस्त्रिंशम् उत्ससर्ज धरण्याम्। तत् श्रुत्वा देवो हर्षः समचिन्तयत्। यः 'किं नु खलु मामन्तरेणार्यः कुपितः स्यात्। उतानया दिशा परीक्षितुकामो माम्। येनायं माम् अतिदुष्करे कर्मणि-समादिष्टवान्। किं चास्य विस्मृताः सौमित्रिवृकोदरप्रभृतयः। किं वा ममानेन वृथा विकल्पितेन। तूष्णीमेवार्यमनु-गमिष्यामि। गुरुवचनातिक्रमकृतश्च किल्विषम् एतत् तपोवने तप एवापास्यति' इत्यवधार्य मनसा प्रथमतरं गतस्तपोवनं तूष्णीमेवातिष्ठत।

अत्रान्तरे राज्यश्रियः परिचारकः संवादको नाम सहसैव प्रविश्य विमुक्ताक्रन्दः सदस्यात्मानम् अपातयत्—सम्भ्रान्तो राज्यवर्धनस्तं पर्यपृच्छत्—'भद्र, भण, किं व्यसनम् अधिकतरम् इतः समुपनयति विधिः' इति। स कथं कथमप्य-कथयत्। 'देव ! यस्मिन्नहन्यवनिपतिरुपरतः इत्यभूद्वार्त्ता,

तस्मिन्नेव दिने देवो ग्रहवर्मा दुरात्मना मालवराजेन जीवलोकं त्याजितः। भर्तृदारिकापि राज्यश्रीः कालायसनिगडसंयतचरणा कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च 'स दुर्मतिः एतामपि भूमिम् जिघृक्षुराजिगमिषति' इति। ततश्च तादृशम् आकस्मिकम् अपरं व्यतिकरम् आकर्ण्य स्वसुः स्नेहात् एकपदे एवास्य ननाश शोकावेगः। विवेश च सहसा गभीरं हृदयं भयंकरः कोपावेगः। मालवोन्मूलनाय भीषणं कृपाणं पाणिना जग्राह। अनुजम् एवम् अवादीत्—'आयुष्मन्! इदं राजकुलम्। अमी बान्धवाः। परिजनोऽयम्। इयं भूमिः। एताः प्रजाः। गतोऽहम् अद्यैव मालवकुलप्रलयाय। अन्तरितः शोको मे महीयसा मन्युना। तिष्ठन्तु सर्व एव राजानः करिणश्च त्वयैव सार्धम्। अयमेको भण्डिः अयुतमात्रेण तुरङ्गमाणाम् अनुयातु माम्। तिष्ठतु भवान्, इत्यभिधाय तस्मिन्नेव वासरे निर्जगामाभ्यमित्रम्। अथ तथागते भ्रातरि, उपरते च पितरि, प्रोषितजीविते जामातरि, मृतायाश्च मातरि, संयतायाश्च स्वसरि, स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथं कथमपि एकाकी कालं तम् अनैषीत्।

अतिक्रान्तेषु बहुषु वासरेषु कदाचित् भ्रातृगमनदुःखेन दूयमानहृदयः प्रक्षीणभूयिष्ठायां क्षपायां क्षणमिव निद्राम् अलभत। स्वप्ने अभ्रंलिहं लोहस्तम्भं भंज्यमानम् अपश्यत् कम्पमानहृदयश्च पुनः प्रत्यबुध्यत। अचिन्तयच्च 'किं नु

मामेवममी सततम् अनुबध्नन्ति दुःस्वप्नाः। स्फुरति च दिवा निशम् अदक्षिणम् अक्षि। सुदारुणाः क्षितिपक्षयम् आचक्षाणाः क्षणमपि न शाम्यन्ति पुनरुत्पाताः। दिने-दिने दिशां दाहाः दृश्यन्ते। नित्यं नभस्तलात् निपतति तारागणः। न कुशल-मिव पश्यामि लग्नस्य। सर्वथो स्वस्ति भवत्वार्याय, इति चिन्तयित्वा भ्रातृस्नेहकातरं हृदयं कथंकथमपि संस्तभ्य उत्थाय क्रियाकलापम् अकार्षीत्। आस्थानगतश्च सहसैव प्रविशन्तम् राज्यवर्धनस्य[1] प्रसादभूमिम् कुन्तलं नाम बृह—दश्ववारं ददर्श। तस्माच्च गौडाधिपेन मिथ्योपचारैः उपचितविश्वासं मुक्तशस्त्रम् एकाकिनम् स्वभवन एव भ्रातरं व्यापादितम् अश्रौषीत्। श्रुत्वा च महातेजस्वी प्रचण्डेन कोपेन सहसैव प्रजज्वाल। ततश्च रोषितो महाशीविष इव परां भीषणताम् अयासीत्। अवादीच्च 'अनार्यं गौडाधिपम् अपहाय क एव सर्वलोकविगर्हित कर्म कुर्यात्। कां नु गतिं गमिष्यति ?। कां वा योनिं प्रवेक्ष्यति ? कस्मिन् वा नरके निपतिष्यति ? गृह्णतोऽस्य पापेन लिप्यत इव मे जिह्वा क्वेदानीं यास्यति दुर्बुद्धिः। जीवति जाल्मे जगद्विगर्हिते गौडाधिपचाण्डाले जिह्वेमि प्रतीकारशून्यं शुचा सूत्कर्तुम्। तत् श्रूयतां मे प्रतिज्ञा। 'यदि परिगणितैरेव वासरैः निर्गौडां न करोमि मेदिनीम् ततस्तनूनपाति पातयात्म्यात्मानम्' इति

१ – कृपापात्रम्

कृतनिश्चयश्च विसर्जितराजलोकः सभामत्याक्षीत्। उत्थाय च निश्शेषमाह्निकम् अकार्षीत्।

अथापरेद्युः प्रभातायां शर्वर्याम् प्रातरेव प्रतीहारम् आदिदेश। गजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुमिच्छामीति। अथ युगपत् प्रधावितैः बहुभिः पुरुषैः आहूयमानः स्कन्दगुप्तः चरणाभ्यामेव संभ्रान्तो विवेश राजकुलम्। दूरादेव च स्पृशन्मौलिना महीतलम् नमस्कारम् अकरोत्। उपविष्टं नातिनिकटे तं जगाद देवो हर्षः। 'श्रुतो विस्तर एवास्य आर्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च। अतः शीघ्रं प्रवेश्यन्तां प्रचारनिर्गतानि गजसाधनानि। न क्षाम्यत्यतिस्वल्पमपि प्रयाणविलम्बम् आर्यपरिभवपीडापावकः' इत्येवम् अभिहितश्च स्कन्दगुप्तः प्रणम्य 'कृतम् अवधारयतु स्वामी समादिष्टम्' इति विज्ञाप्य स्वाम्यादेशसंपादनाय निर्जगाम। देवोऽपि हर्षः कृतप्रतिज्ञः दिशां विजयाय प्रयाणं समादिदेश। तदानीम् प्रतिसामन्तानाम् उदवसितेषु बहुरूपाणि दुर्निमित्तानि प्रादुरभवन्। तथाहि। प्रत्यजिरं मधुसरघासङ्घाताः जह्लादिरे। वासरेपि विरसं विरेसुः अशिवाः शिवाः। उद्यानपादपाः अकालकुसुमानि दधुः। चामराण्यकस्मादपतन् चेटीपाणिपल्लवात्। उपतोरणम् उन्मुखः कौलेयकगणः निष्कारणम् अक्राणीत्। शूराणां शरीरेषु शोणितवृष्टयो निपेतुः। नभस्तलात् उल्कादण्डाः न्यपतन्। भूमयः चकम्पिरे। बभ्राम वात्या—इति।

अथ व्यतीतेषु केषुचित् दिवसेषु, मौहूर्तिकमण्डलेन सुगणिते सुप्रशस्तेऽहनि, स्नात्वा भगवतो नीललोहितस्यार्चां विरचय्य, प्रदक्षिणार्चिषम् आशुशुक्षणिं हुत्वा, द्विजेभ्यो रत्नानि गाश्च सहस्रशो दत्त्वा, भवनात् निर्जगाम। नातिदूरे च नगरात् उपसरस्वति निर्मिते महति तृणमये मन्दिरे प्रस्थानमकरोत्। निनाय च तत्र तं दिवसम्। प्रतिपन्नायां शर्वर्याम् अखिलं राजलोकं सम्मान्य सुष्वाप। अथ गलतितृतीये यामे गम्भीरध्वनिः अताड्यत प्रयाणपटहः। सद्य एव प्रतिदिशम् आगच्छद्भिः राजभिः आपुपूरे राजद्वारम्। उदिते च भगवति दिनकृति राज्ञः समायोगसमयशंसी सस्वान संज्ञाशङ्खः। अथ नचिरादिव करेणुकयोह्यमानः नरपतिः दण्डिभिः इतस्ततः समुत्सार्यमाणजनसमूहः निर्जगाम। अथ कटकं गत्वा, स्वावासम् आसाद्य, करेणुकातोऽवतीर्य, सबहुमानं विसर्जितराजलोकः बाह्ये आस्थानमण्डपे स्थापितम् आसनम् आचक्राम। प्रास्तसमायोगश्च क्षणम् आसिष्ट।

अथ तत्र प्रतीहारः प्रविश्य विज्ञापितवान्—'देव! प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितः हंसवेगनामा दूतः तोरणम् अध्यास्ते' इति राजा तु तम् 'आशु प्रवेशय' इति आदिदेश। अथ प्रतीहारः स्वयमेव निर्गत्य हंसवेगं प्रवेशयामास। सोऽपि प्रभूतप्राभृतभृतां पुरुषाणां समूहेन अनुगम्यमानः प्रविवेश राजमन्दिरम्। आरादेव च

पञ्चाङ्गालिङ्गिताङ्गणः प्रणामम् अकरोत् । 'एह्येहि' इति सबहुमानम् आहूतः सविनयम् उपसृत्य स्निग्धया नरेन्द्र-दृष्ट्या निर्दिष्टम् अविप्रकृष्टं प्रदेशम् अध्यास्त । ततो राजा तं पप्रच्छ 'हंसवेग ! श्रीमान् कच्चित् कुशली कुमारः' इति । स प्रत्यवादीत् 'अद्य कुशलम् । येनैवं सौहार्दार्द्रया गिरा पृच्छति देवः' इति । स्थित्वा च मूहूर्तं पुनरुवाच—समस्त-भूतिभाजनभूतस्य देवस्यानुरूपं प्राभृतमेव दुर्लभं लोके । तथाप्यस्मत्स्वामिना संदेशम् अशून्यतां नयता पूर्वजोपार्जितं वारुणातपत्रम् आभोगाख्यम् अनुरूपस्थानन्यासेन कृतार्थी-कृतम् । अस्य च बहून्याश्चर्याणि दृश्यन्ते । प्रतिदिवसं छायायाः शैत्यहेतो एकैकः सोमस्य रश्मिः एनं प्रविशति । अस्मिन् प्रविष्टे मणिशलाकाभ्यः यावदिच्छम् अम्भसाम् अच्छाः धाराश्च्योतन्ति । प्रचेता इव यश्चतुर्णाम् अर्णवानाम् अधिपतिः भूतो भावी वा तम् अनुगृह्णाति छायया नेतरम् । इदं च न सप्तार्चिः दहति । न पृषदश्वो हरति । नोदकम् आर्द्रयति । न रजांसि मलिनयन्ति । एतत्तावदनुगृह्णातु दृशा देवः । संदेशमपि पश्चात् श्रोष्यति,' इत्यभिधाय निवृत्या-त्मीयं पुरुषम् अभ्यधात् । 'उत्तिष्ठ, दर्शय देवस्य' इति ।

स वचनानन्तरम् उत्थाय पुमान् ऊर्ध्वीकृत्य तत् निचोल-कादकोषीत् । चित्रीयमाणचेताःस राजा शेषफणिफणामण्डलमिव

अतिसितमहः तत् त्रैलोक्याद्भुतं महच्छत्रं सादरम् ऐक्षिष्ट। दृष्टे च तस्मिन् राज्ञा प्रथमं, शेषमपि प्राभृतं प्रकाशयाञ्चक्रुः क्रमेण कार्माः। तद्यथा। आहतलक्षणान् अलंकारान्। शौचक्षमाणि क्षौमाणि। पानभाजनानां निचयान्। वेत्रमयान्यासनानि। सुभाषितभाञ्जि पुस्तकानि। लवङ्गपुष्पमञ्जरीणां जातीफलस्तवकानाञ्च राशीन्। बहुसुभाषितजल्पाकजिह्वांश्च शुकशारिकाप्रभृतीन् पक्षिणः। प्रवालपञ्जरगतांश्च चकोरान् इति। राजा तु छत्रदर्शनात् प्रहृष्टहृदयः प्रथमप्रयाणे शोभनं निमित्तमिति मनसा जग्राह। अपनीते च तस्मात् प्रदेशात् प्राभृतसंभारे क्षणमिव स्थित्वा 'हंसवेग! विश्राम्यताम्' इति प्रतीहारभवनं विसर्जयाम्बभूव। स्वयमप्युत्थाय स्नात्वा मङ्गलाकांक्षी प्राङ्मुखः प्राविशदाभोगस्य छायाम्। अथ विशत एवास्य छायाजन्मना जडिम्ना हृदयम् अतिशिशिरम् अभवत्। जातविस्मयश्चाकरोन्मनसि।'एकमजर्यं संगतमपहाय कास्त्यन्या प्रतिकौशलिका' इति। आहारकाले च हंसवेगाय चन्दनं वाससी कटिसूत्रं कर्णाभरणं प्रभूतं भोग्यजातञ्च प्राहिणोत्।

ततः क्रमेण भगवति सहस्रांशौ वारुणीं दिशं प्रयाते, स्फुरति सन्ध्यारागे, विततवितानतलवर्ती नरेन्द्रः 'यात तावत्' इति विसर्ज्यानुजीविनः हंसवेगमादिष्टवान्, 'कथय संदेशम्'

इति। प्रणम्य स कथयितुं प्रास्तावीत्। 'देव ! पुरा बराह-संपर्कसंभूतगर्भया भगवत्या भुवा नरको नाम सूनुः असावि रसातले स च वरुणस्य सकाशात् इदम् आतपत्रम् अहार्षीत्। तस्यान्वये स्थितिवर्मणः पुत्रः सुस्थिरवर्मा नाम राजा जज्ञे। यं मृगाङ्क इति जनाः जगुः। तस्य च श्यामादेव्यां भास्करवर्मा कुमारः समभवत्। अयमस्य शैशवादारभ्य संकल्पः स्थेयान्। स्थाणुपादारविन्दद्वयादृते नान्यं नमस्कुर्यामिति। ईदृशश्चायं मनोरथः त्रयाणामन्यतमेन संपद्यते। सकलभुवनविजयेन वा मृत्युना वा देवोपमेन मित्रेण वेति। तत् प्राग्ज्योतिषेश्वरः देवेन सह अजर्यं संगतम् इच्छति। यदि देवस्यापि मैत्रीयति हृदयम्, ततः समाज्ञाप्यताम्; अनुभवतु देवस्य गाढोपगूढानि कामरूपाधिपतिः। नाभिनन्दति चेत् देवः प्रणयम्, आज्ञापयतु किं कथनीयम् मया स्वामिनः' इति। विरतवचसि तस्मिन् भूपालः सबहुमानं जगाद—'हंसवेग ! कथमिव तादृशि महात्मनि स्निह्यति मद्विधस्य अन्यथा प्रवर्तते मनः। श्रेयांश्च संकल्पः कुमारस्य। स्वयं बाहुशाली मयि च सुहृदि हरादृते कमन्यं नमस्यति। तत् तथा यतेथाः, यथा न चिरमियमस्मान् क्लेशयति कुमारदर्शनोत्कण्ठा' इति। हंसवेगस्तु, 'कतिपयैरेव दिवसैः परागतः प्राग्ज्योतिषेश्वरः इति करोतु देवश्चेतसि, इत्युक्त्वा नमस्कृत्य निर्जगाम। राजापि रजनीं कुमारदर्शनोत्सुकः समनैषीत्। प्रभाते च

प्रभूतं प्राभृतं दत्वा हंसवेगं प्राहिणोत्। स्वयमपि अनवरतैः प्रयाणकैः अभ्यमित्रं प्रावर्तत।

कदाचित् राज्यवर्धनभुजबलोपार्जितम् अशेषं मालवराज-साधनमादाय भण्डिः राजद्वारम् आगत्य तुरङ्गमात् अवतीर्य अवनतमुखो विवेश राजमन्दिरम्। दूरादेव विमुक्ताक्रन्दः पपात पादयोः। अवनिपतिस्तु दृष्ट्वा तम् अभिनवीभूतभ्रातृ-शोकहुताशनः प्रत्युद्गम्य उत्थाप्य, गाढम् उपगुह्य कण्ठे करुणम् अतिचिरं रुरोद। शिथिलीभूतमन्युवेगश्च पुनरागत्य निजासने निषसाद। अथ प्रक्षालितमुखः भ्रातृमरणवृत्तान्तम् अप्राक्षीत्। अकथयच्च यथावृत्तमखिलं भण्डिः। अथ नरपति-स्तमुवाच—'राज्यश्रीव्यतिकरः कः ?' इति। स पुनरवादीत्—'देव ! देवभूमिं गते देवे राज्यवर्धने देवी राज्यश्रीः परिभ्रश्य बन्धनात् विन्ध्याटवीं सपरिवारा प्रविष्टेति, लोकतो वार्ता-मश्रृणवम्। अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिताः नाद्यापि निवर्तन्ते' इति। तच्चाकर्ण्य भूपतिरब्रवीत् किमन्यैरनुपदिभिः। यत्र सा तत्र स्वयमहं यास्यामि। भवानपि कटकम् आदाय प्रवर्ततां गौडाभिमुखम्' इत्युक्त्वा चोत्थाय स्नानभुवम् अगात्। स्नातेन भण्डिना सार्धम् अभुक्त। निनाय च तेनैव सह वासरम्।

अथापरेद्युरुषस्येव भण्डिः भूपालमुपसृत्य व्यज्ञापयत्।

'पश्यतु श्रीराज्यवर्धनभुजबलोपार्जितं साधनं मालवराजस्य' इति। नरपतिना सः 'एवं क्रियताम्, इत्यनुज्ञातः दर्शयांबभूव। तद्यथा। अनेकसहस्रसंख्यान् करिणः, हरिणरंहसो हरीन्, तारान् हारान्, शुचीनि वालव्यजनानि, जातरूपमयनालं श्वेतातपत्रम्, अप्सरतुल्याः वारविलासिनीः सिंहासनप्रभृतीनि राज्योपकरणानि इति। तत्सर्वम् अवनिपालः स्वीकर्तुं यथाधिकारम् आदिक्षत् अध्यक्षान्।

अन्यस्मिंश्चाहनि स्वसारम् अन्वेष्टुम् उच्चचाल। परिमितैरेव प्रयाणकैः अवाप विन्ध्याटवीम्, आट च तस्याम् इतश्चेतश्च सुबहून् दिवसान्। एकदा तु आटविकसामन्तस्य शरभकेतोः सूनुः व्याघ्रकेतुः कज्जलश्यामलं कञ्चन शबरयुवानम् आदाय आगत्य विज्ञापयामास—'देव! सर्वस्यास्य विन्ध्यस्य स्वामी शबरसेनापतिः भूकम्पो नाम, तस्यायं निर्घातनामा स्वस्रीयः सकलस्यास्य विन्ध्यारण्यस्याभिज्ञः। एनं पृच्छतु देवः' इति अवनिपतिस्तमप्राक्षीत्—'अङ्ग! अभिज्ञा यूयमस्य सर्वस्योद्देशस्य। सेनापतेर्वान्यस्य वा कस्यचिदुदाररूपा नारी दर्शनगोचरम् आगता भवेत्' इति। निर्घातस्तु प्रणम्य व्यज्ञापयत्—देव! नैवंरूपा काचिदबला दृष्टा। देवादेशादिदानीम् अन्वेषणं प्रति यत्नः क्रियते। इतश्चार्धगव्यूतिमात्रे महति महीरुहां षण्डे दिवाकरमित्रनामा पाराशरी प्रतिवसति। स 'यदि विन्देद्वार्ताम्' इति। नरपति-

रब्रवीत् । 'अङ्ग—समुपदिश तमुद्देशम् यत्रास्ते सः' इति । इत्येवमुक्त्वा तेनैवोपदिश्यमानवर्त्मा चरणाभ्यामेव गत्वा महतस्तरुषण्डस्य मध्यभागे कृतावस्थानं स्वर्गतस्य ग्रहवर्मणो बालमित्रं सौगतमते गृहीतकाषायम् मध्यमे वयसि वर्तमानं दिवाकरमित्रम् अद्राक्षीत् । अतिप्रशान्तगम्भीराकारं तं दूरादेव शिरसा ववन्दे ।

दिवाकरमित्रस्तु भूपतेराकारविशेषेण सञ्जातबहुमानः ससंभ्रमम् अभ्युत्थाय गुरुमिवाभ्यागतं स्वागतगिराभिनन्द्य स्वेनासनेन 'आध्वमत्र' इति निमन्त्रयाञ्चकार । पार्श्वस्थितञ्च शिष्यम् अब्रवीत्—'आयुष्मन् ! उपनय कमण्डलुना पादोदकमिति ।' राजा बभाषे—'भवादृशां दर्शनमेव परमं पावनम् । तदलं पाद्येन । आसतां भवन्तो यथासुखम् आसीनोऽहम् ।' इत्यभिधाय क्षितावेवोपाविशत् । स्वमेवासनं भेजे भदन्तः । भूपतिमुखनिहितनयनः मुहूर्त्तमिव स्थित्वा अवादीत्—'पुण्यवतः कथंचित् प्राप्तस्य भवतः केन प्रियं समाचरामः इति पारिप्लवं चेतो नः । यदि कथनीयं तत् कथयतु भवान् । केन कृत्येन भव्यो भूषितवान् भूमिमिमाम् । कस्माच्च संतप्तरूपेव ते तनुरियं विभाव्यते' इति राजा जगाद—'आर्य ! मधुरेण वचसैव ते सर्वम् अनुष्ठितम् । धन्योऽस्मि । मम हि विनष्टनिखिलेष्टबन्धोः जीवितानुबन्धनिबन्धनम् एकैव यवीयसी स्वसावशेषा । सापि भर्तुः वियो-

गात् वैरिपरिभवभयात् भ्रमन्ती विंध्यवनमिदमाविशत् । अतः तामन्वेष्टुं वयमिमामटवीमटामः । कथयतु गुरुरपि यदि कदाचित् श्रुतिपथम् उपगतोति ।' तत् श्रुत्वा भदन्तः पुनरभ्यधात् । 'धीमन् ! न खलु कश्चिदेवंविधो वृत्तान्तोऽस्मानुपगतवान्,' इति ।

तदानीम् अकस्मादागत्य अपरो भिक्षुः अभाषत— 'भगवन् भदन्त ! महत् करुणं वर्तते । बाला कल्याणरूपा स्त्री वैश्वानरं विशति । संभावयतु तां भगवान्' इति । राजा तु जातानुजाशङ्कः पप्रच्छ—'पाराशरिन् ! कियद् दूरे सा, आकारतो वा कीदृशी ? पृष्टा वा त्वया कासि कस्यासीत्यादि' ? इति । भिक्षुराचचक्षे—महाभाग ! श्रूयताम् अहं हि प्रत्युषस्येवाद्य वन्दित्वा भगवन्तम् अनेनैव नदीतीरेण विहृतवानतिदूरम् । एकस्मिंश्च वनलतागहने नारीणां रुदितम् आकर्णितवानस्मि । गतस्तं प्रदेशं दृष्टवानस्मि वह्वीभिरबलाभिः परिवृतां क्षामक्षामां मरणे कृतनिश्चयां योषितम् । सा तु समीपगते मयि तदवस्थापि सबहुमानम् आनतमौलिः प्रणतवती । तस्मात् स्त्रैणात् अन्यतरा योषिदागत्य माम् अभिहितवती । 'भगवन् ! इयं नः स्वामिनी, मरणेन पितुः, अभावेन भर्तुः, प्रवासेन भ्रातुः भ्रंशेन शेषस्य बान्धववर्गस्य, निरवलम्बना, परिभवेन अरातिकृतेन कदर्थिता, दारुणं दुःखम् अपारयन्ती सोढुम्, अग्निं प्रविशति, परित्रायताम्' इति । अहमभिहितवान् । आर्ये—

गिरामगोचरोऽयमस्याः शोकः। मम गुरुरपर इव सुगतः समीपगत एव। कथिते मयास्मिन् उदन्ते नियतम् आगमिषयति सौगतैः सुभाषितैः एनां प्रबोधपदवीम् आरोपयिष्यति' इति। तच्च 'श्रुत्वा त्वरतामार्यः' इत्यभिदधाना पुनरपि पादयोः पतितवती। सोऽहमुपगम्य त्वरमाणः व्यतिकरमिमं गुरवे निवेदितवान्' इति। अथ भूभृत् 'नियतं सैवेयं मम भगिनी' इत्युक्त्वा श्रमणमभ्यधात्। 'आर्य! उत्तिष्ठ, दर्शय क्वासौ,' इति भाषमाण एव उत्तस्थौ।

अथ समस्तशिष्यवर्गानुगतेन आचार्येण अनुगम्यमानः पद्भ्यामेव तं प्रदेशं प्रावर्तत। लतावनान्तरितस्य महतः स्त्रैणस्य मुमूर्षोः अनेकप्रकारान् आलापान् श्रुत्वा सत्वरम् उपसर्पन् अग्निप्रवेशायोद्यतां राज्यश्रियं ददर्श। आललम्बे च हस्तेन तस्याः ललाटम्। असंभावितागमनस्य सहसा प्राप्तस्य भ्रातुः कण्ठे समाश्लिष्य, दुःखसंभारेण विलोचनाभ्यां स्थूलस्थूलम् अश्रुप्रवाहम् उत्सृजन्ती राज्यश्रीः सुचिरं रुरोद। प्रशान्ते च मन्युवेगे वह्नेः समीपात् आक्षिप्य, भ्रात्रा नीता निकटवर्तिनि तरुतले निषसाद। अथ नरेन्द्रः भदन्तशिष्योपनीतेन उदकेन स्वसुः आत्मनश्च मुखम् अक्षालयत्। ततोऽब्रवीत् स्वसारम्—'वत्से! वन्दस्वात्रभवन्तं भदन्तम्। एष ते भर्तुः द्वितीयं हृदयम् अस्माकञ्च गुरुरिति'। राजवच-

नात्तु सा पतिपरिचयश्रवणेन पुनरानीतवाष्पा प्रणनाम। आचार्यः किञ्चित् परावृत्तनयनः दीर्घं निशश्वास। स्थित्वा च क्षणमेकं किञ्चित् मधुरया वाचा व्याजहार—'कल्याणराशे! अलं रुदित्वा। क्रियतां स्नानविधिः' इति। अथ भूपतिः उत्थाय स्नात्वा गिरिसरित्ति शुचा परवतीं प्रयत्नप्रतिपन्न-भोजनां प्रथमम् अभोजयत्। अनन्तरञ्च स्वयम् आहार-स्थितिम् अकरोत्। भुक्तवांश्च बन्धनात् प्रभृति विस्तरतः स्वसुः सर्वं व्यतिकरं परिजनतः शुश्राव। अथ सुखासीनम् एकत्र तरुतले भगिनीद्वितीयं राजानम् आचार्यः समुपसृत्य वक्तुमुपचक्रमे।

'श्रीमन्! आकर्ण्यताम्। आख्येयमस्ति नः किञ्चित्। पुरा खलु ताराराजः शैलादुदयादुदयमानः वरुणालयस्य विमले वारिणि संक्रान्तम् आत्मनः प्रतिबिम्बं विलोकितवान्। दृष्ट्वा च तदा सस्मार सस्मरः तारायाः मुखस्य। तेनास्वस्थः स्थवीयसः वाष्पविन्दून् विससर्ज। अधः पततः तान् आचेमुः उदन्वति मुक्ताशुक्तयः। तासाञ्च कुक्षिषु मुक्ताफलान्यभवन्। तानि च रसातलनिवासी वासुकिः आससाद। स तैः एकावलीम् अकल्पयत्। चकार च मन्दाकिनीति नाम तस्याः। सा च सर्वासाम् ओषधीनाम् अधिपतेः सोमस्य प्रभावात् विषघ्नी सन्तापहारिणी च बभूव।

स तां सर्वदा विषोष्मशान्तये पर्यधत्त। समतिक्रान्ते कियत्यपि काले कदाचित् ताम् एकावलीम् तस्मात् नागराजात् नागार्जुनो नाम भिक्षुः अभिक्षत लेभे च। स च सातवाहननाम्ने नरेन्द्राय ददौ ताम्। सा चास्माकं शिष्य-परंपरया हस्तमुपगता। सेयमायुष्मता गृह्यताम्' इत्यभिधाय तमुद्धृत्य बबन्ध स्कन्धभागे भूपतेः। अथैकदा राज्यश्रियः ताम्बूलवाहिनी पत्रलता पार्थिवं व्यज्ञापयत्—'देव ! देवी विज्ञापयति। न स्मराम्यार्यस्य पुरः कदाचिदुच्चैर्वचनमपि। कुतो विज्ञापनम्। इयं हि शुचाम् असह्यता शिथिलयति विनयम्। काषायग्रहणाभ्यनुज्ञया अनुगृह्यतामयं जनः,' इति। जनाधिपस्तु तदाकर्ण्य तूष्णीमभूत्। आचार्योऽभ्यधात्—'मेधा-विनि ! नात्यर्थमेवार्हसि मनसि तमसः प्रसरं दातुम्। किमत्र क्रियते। कतमः उपालभ्यते। सर्वम् अक्षिणी निमील्य सोढव्यम्। पुरातन्यः स्थितयः एताः केन शक्यन्तेऽन्यथाकर्तुम्। सर्वं विश्वं नश्वरम्। तत् गुणवतो ज्येष्ठस्य नियोगे सर्वथा स्थातव्यम्' इति। विरतवचसि तस्मिन् निजगाद नरपतिः—'भगवन् ! किञ्चिदर्थये भवन्तम्। अस्माभिः भ्रातृवधापकारिणः रिपुकुलस्य प्रलयाय प्रतिज्ञा कृता। अतो नियुङ्क्तामार्यो मदीये कार्ये। इयं नः स्वसा बाला बहुदुःखखेदिता च लालनीया नित्यम्। अद्य प्रभृति यावदयं जनो लंघयति प्रतिज्ञाभारं तावदिमाम् अत्रभवतः कथाभिः धर्म्याभिः

तत्त्वोपदेशैश्च प्रतिबोध्यमानामिच्छामि। इयन्तु ग्रहीष्यति मयैव समं समाप्तकृत्येन काषायाणि' इति। अथ तथेत्यभिनन्दितप्रणये भदन्ते प्रीयमाणः पार्थिवः तत्र तामुषित्वा विभावरीम्, उषसि वसनालंकारादिप्रदानपरितोषितं विसृज्य निर्घातम् आचार्येण सह स्वसारमादाय, कटकं प्रत्याजगाम। अथ राज्यश्रीप्राप्तिकथां कथयत एवाबभासे वासरावसानवेला। अवसिते सन्ध्यासमये अपरिमितयशः-पानतृषिताय मुक्तामयश्चषक इव श्वेतभानुरुपानीयत निशया नरेन्द्राय।

इति हर्षचरितसारः

समाप्तः

# GLOSSARY

| P. | Line | Words. | Meanings. |
|---|---|---|---|
| 1 | 2 | ब्रह्मोद्याः | Discussions of theo logical problems |
| ,, | 12 | कामण्डलवेन | Belonging to a कमण्डलु (a water-pot). |
| ,, | 13 | अनुनाध्यमानोऽपि | Being solicited by. |
| ,, | 16 | उन्नतिम् | Pride. |
| 2 | 3 | संहर रोषम् | Restrain your anger. |
| ,, | 6 | रोषदोषनिषद्ये | A market-place for the evil of anger. |
| ,, | 7 | अनागसम् | Free from fault of sin. |
| ,, | 10 | आह्निककरणाय | To perform daily duties. |
| ,, | 17 | संस्तुतजनविरहः | Separation from familiar people. |
| 3 | 10 | उपकण्ठभूमयः | The neighbourhood. |
| ,, | 14 | सैकतम् | Made of sand. |
| ,, | 18 | नक्तंदिनम् | Day and Night. |
| ,, | 20 | तुरङ्गह्रेषितह्रादम् | The sound of the neigh-ing of horses. |

| P. | Line. | Words. | Meanings. |
| --- | --- | --- | --- |
| 4 | 6 | कृतोपसंग्रहणौ | Who have shown the respectful salutation. |
| " | 7 | उपजग्राह | Received. |
| " | 8 | प्रवयसम् | Advanced in age. (Older of the two). |
| " | 15 | अन्तर्वत्नी | A pregnant woman. |
| " | " | वैजनने मासि | In the last month of pregnancy |
| " | 18 | आसेचनकदर्शनम् | Charming-looking. |
| 5 | 2 | गव्यूतिमात्रं | At a distance of two miles. |
| " | " | पारेशोणं | On the banks of the river Sona. |
| " | 4 | नेयमाकृतिः दिव्यतां व्यभिचरति | Your form in no way falls short of divinity. |
| " | 8 | अनुषङ्गदृष्टो जनः | People seen only by chance. |
| " | 12 | निश्चलतारकेण | With motionless pupil. |
| " | 18 | गणरात्रापगमे | After the lapse of a few nights. |
| 6 | 2 | अन्वक् | Following me. |
| " | 3 | वाणिनी | An excellent woman, a lady. |
| " | 9 | विधेयास्मि ते | I am your servant. |

| P. | Line. | Words. | Meanings. |
|---|---|---|---|
| 7 | 9 | निर्विशेषं | Impartially. |
| ,, | 15 | आषाढी | One with a hermit's staff. |
| 8 | 6 | व्ययुज्यत | Was separated from. |
| ,, | 9 | संस्थिते पितरि | When his father died. |
| ,, | 13 | इत्वरो बभूव | He became unrestrained in his actions. |
| ,, | 20 | वैपश्चितीं प्रकृतिं | Learned nature. |
| 9 | 5 | पारशवः | One born of a Brahmin father and a Sudra mother. |
| ,, | 15 | कालातिपातः | Delay in time. |
| 10 | 9 | कृतकशिपु | Refreshed with food and clothing. |
| ,, | 12 | अन्यथा संभावितोऽस्मि | I am misunderstood. |
| ,, | 17 | प्रास्थानिकानि सूक्तानि | Hymns for starting on a journey. |
| ,, | 19 | द्युम्नं | Wealth; property. |
| 11 | 6 | स्कंधावारं | Royal camp. |
| ,, | 11 | दौवारिकः | Door-keeper. |
| ,, | 15 | अजिरे | Court. |
| 12 | 3 | सोमपायिनां | Those who have drunk *Some* juice. |
| ,, | 6 | अभ्यागारिकः | One who takes care of his family. |

| P. | Line. | Words. | Meanings. |
|---|---|---|---|
| 12 | 15 | अतिदक्षिण | Very gracious. |
| 13 | 11 | शक्याशक्य-परिसंख्यानं न कृतं | You have not thought of what is possible and what is impossible. |
| " | 12 | संख्यातिगाः | Innumera ble. |
| " | 15 | सज्जाः | Ready. |
| 14 | 1 | सहजैव | Natural. |
| " | 3 | दाक्षिणात्यं | Belonging to the South i. e. Dravidian. |
| " | 10 | मस्करिणं | An ascetic. |
| " | 12 | उपनगरं | Near the town |
| 15 | 1 | जीर्णमातृगृहस्य | Of the dilapidated Kali Temple. |
| " | 3 | कार्पटिकवृन्दस्य | Of the group of ascetics. |
| 16 | 5 | परिवारात् | From its cover. |
| " | 7 | परद्रव्यग्रहणदुर्वि-दग्धमपि | Though unknown to receive other's property. |
| " | 16 | बालमित्रं | Friend from boyhood. |
| " | 18 | द्राविडः | A Dravidian |
| 17 | 7 | विगाढायां शर्वर्याम् | When the night was well advanced. |

| P. | Line. | Words. | Meanings |
|---|---|---|---|
| 17 | 16 | उत्तानशयस्य | Lying on its back. |
| „ | „ | जातजातवेदसि | With fire kindled in. |
| „ | 17 | कृष्णोष्णीषम् | With a black turban. |
| 18 | 1 | शातक्रतवीम् | East. |
| „ | 5 | नातिदवीयसि | Not far from. |
| „ | 12 | तपस्वी | Poor ; helpless ; pitiable. |
| „ | 12 | प्रकोष्ठप्रहारैः | By strokes of his fist. |
| „ | 16 | काकोदर | A serpent. |
| 19 | 3 | कच्याम् | The end of the lower garment which, after the cloth is carried round the body, is brought up behind and stucked into the wais t-band. |
| 20 | 3 | साधयतु | Attain. |
| „ | 8 | क्षीणभूयिष्ठायां | The greater part of which had passed away. |
| „ | 15 | निसर्गतः | By nature. |
| „ | 21 | परिणत-प्रायायामुत्तु श्यामायाम् | When the night had at most passed away. |
| 21 | 10 | रराण | Sounded. |

| P. | Line. | Words. | Meanings. |
|---|---|---|---|
| 21 | 12 | मुदोवसरे | On an occasion for joy. |
| 22 | 4 | अष्टवर्षदेशीयं | About eight years. |
| ,, | 18 | उत्तरापथं | To the North. |
| ,, | 19 | प्रयाणकानि | Stages in the journey. |
| 23 | 3 | वासतेय्याः | Of the night. |
| ,, | 9 | हरितहयः | The Sun. |
| ,, | 10 | चीरचीरिकया | By a rag. |
| ,, | 17 | आत्मपरिबर्हं | His belongings. |
| ,, | 19 | संपिण्डितम् | Consisting of. |
| 24 | 15 | वेपथुमता | Trembling. |
| ,, | 16 | क्षयक्षामकण्ठः | His throat, meek due to emaciation. |
| ,, | 20 | भिषगनुरोधः | The request of doctors. |
| 25 | 7 | उपह्वरे | In secret. |
| ,, | 11 | सुतनिर्विशेषं | In the same way as a son. |
| ,, | 14 | क्षपामुखे | At the beginning of the night. |
| ,, | 20 | प्लुष्ट इव | As if burnt. |
| 26 | 9 | प्रत्यग्रस्नानार्द्रदेहां | With her body wet due to bathing just before. |

| P. | Line. | Words. | Meanings. |
|---|---|---|---|
| 26 | 14 | उत्तानितं | Up-raised. |
| ,, | 15 | प्राकृतप्रमदेव | Like a country-woman. |
| ,, | 16 | मन्युवेगे | The force of grief. |
| 27 | 6 | कदर्थनीया | Teased ; troubled. |
| ,, | 13 | परिवर्त्यमानतारकं | The pupils of whose eyes were revolving. |
| ,, | 18 | पूषाऽपि | The sun also. |
| 28 | 1 | शोकमूकेन | Silent due to sorrow. |
| ,, | 2 | निर्व्यवधानायां | Uncovered. |
| ,, | 13 | आभिमुख्यम् | Inclination. |
| ,, | 17 | कीकसेषु | Bones. |
| ,, | 21 | प्रथीयसा | Big. |
| 29 | 9 | विस्रस्तकुन्तलम् | With locks of hair loosened. |
| ,, | 10 | विनिहितैकोप-बर्हायाम् | On which only one pillow was placed. |
| ,, | 11 | जोषम् अस्थात् | Remained silent. |
| ,, | 17 | वामता | Perversity. |
| 30 | 21 | परासुतां गते | When he was dead. |
| ,, | 1 | कापुरुषम्: | A Contemptible man, a coward. |
| ,, | 4 | विलीनं धैर्यम् | Courage has disappeared. |

| P. | Line. | Words. | Meanings. |
|---|---|---|---|
| 30 | 8 | निस्त्रिंशं | Sword. |
| ,, | 21 | उपरत: | Died. |
| 31 | 2 | कालायसनिगड | Iron-fetters |
| ,, | 4 | जिघृक्षुः | Desiring to conquer. |
| ,, | 5 | व्यतिकरम् | Misfortune ; calamity. |
| ,, | 14 | अभ्यमित्रम् | Against the enemy. |
| ,, | 20 | अभ्रंलिहम् | Touching the clouds, i. e. very high. |
| 32 | 3 | उत्पाता: | Omens foreboding evil. |
| ,, | 8 | बृहदश्ववार | The chief cavalry officer. |
| ,, | 17 | जाल्म | A rogue, a rascal. |
| ,, | 18 | प्रतीकारशून्यं | Without revenge. |
| ,, | 19 | परिगणितैरेव | Numbered i. e. ; a few. |
| ,, | 20 | तनूनपाति | In fire. |
| 33 | 10 | प्रचारनिर्गतानि | Which have gone out to ramble. |
| ,, | 15 | उदवसितेषु | In houses. |
| ,, | 16 | प्रत्यजिरं | In every courtyard. |
| ,, | 17 | शिवा: | Female jackals. |
| ,, | 19 | उपतोरणम् | Near the gates. |
| ,, | ,, | कौलेयकगण: | Group of dogs. |

| P. | Line. | Words. | Meanings. |
|---|---|---|---|
| 33 | 21 | उल्कादण्डा | Fire-brands. |
| ,, | 22 | वात्या | Whirl-wind. |
| 32 | 9 | आपुपूरे | Filled. |
| ,, | 15 | प्रास्तसमायोगः | Having dispersed the assembly. |
| ,, | 20 | प्रभूतप्राभृतभृतां | Carrying many presentations. |
| 35 | 3 | अविप्रकृष्टं | Not far away. |
| ,, | 15 | सप्तार्चिः | Fire. |
| ,, | ,, | पृषदश्वः | Wind. |
| ,, | 19 | निचोलकात् | From its case. |
| 36 | 3 | कार्माः | Servants. |
| ,, | 13 | जडिम्ना | By frigidity; coldness. |
| ,, | 14 | अजर्यं संगतं | Undiminishing friendship. |
| ,, | 15 | प्रतिकौशलिका | A present in return. |
| 37 | 2 | असावि | Was given birth to. |
| ,, | 16 | संकल्पः | His intention. |
| ,, | 19 | परागतः | Come. |
| 38 | 1 | अनवरतैः | Haltless. |
| 39 | 3 | हरिणरंहसः | Swift as the deer. |
| ,, | 5 | जातरूपमयनालं | With golden handle. |

| P. | Line. | Words. | Meanings. |
|---|---|---|---|
| 39 | 14 | स्वस्रीय: | Son of sister. |
| ,, | 21 | पाराशरी | An ascetic. |
| 40 | 4 | सौगतमते | In the Buddhist religion. |
| ,, | 14 | भदन्त: | The Buddhist mendicant |
| ,, | 16 | पारिप्लवं | Disturbed. |
| 41 | 16 | स्त्रैणात् | From the group of women. |
| ,, | 20 | कदर्थिता | Troubled ; distressed. |
| 42 | 12 | मुमूर्षो: | Desiring to die. |
| 43 | 2 | परावृत्तनयन: | With eyes turned. |
| ,, | 14 | सस्मर: | With love. |
| ,, | 15 | स्थवीयस: | Large. |
| ,, | 18 | एकावलीम् | A necklace of one string. |
| 44 | 15 | नश्वरम् | Perishable. |
| 45 | 4 | विभावरीम् | Night. |
| ,, | 8 | श्वेतभानु: | The Moon. |

---

मुद्रक—नरोत्तमदास अग्रवाल, नेशनल प्रेस, प्रयाग ५ म ७५४

...ा.)। एक...
...में जुमी नम...
...। उसपर २.४
...करीका आरोप था। दे...
...बाद सात व्यक्तियोंको
तस्करी अथवा इन्हें बेचनेके
...गमें फांसीपर लटकाया जा चुका है।
गत वर्ष मई में ही ऐसे अपराधके लिए
...तकी सजा सुनानेकी व्यवस्था की गयी थी।
गृह मंत्रालयके बयानके अनुसार सऊदी
अरबके एक नागरिकको भी कल नमाजके
बाद फांसीपर चढ़ा दिया गया। इनपर
हत्याका अभियोग था। दो फिलीपीन
नागरिकोंको अपने ही देशके चार लोगोंको
मौतके घाट उतारनेके इल्जाममें क्षेत्रमें फांसी
दी गयी, जबकि सऊदी अरबके नागरिकको
पारिवारिक विवादमें चार लोगोंकी हत्याके
अभियोग तबौक शहरमें फांसीपर लटकाया
गया।

## १०वीं सदीके किलेका पता चला

रंजे (स... ...र्स (य)।
सोवियत...
सदीके...
जिस...
लि...

